अग्निवेशमहर्षिकृता चरकप्रतिसंस्कृता च

# श्रीचरकसंहिता.





## सम्पूर्णा, मूलमात्रा ।



युर्वेदमहोपाध्याय इत्युपाधिधारिणा पदेकु-
ावतंसदाजीशास्त्रिसूनुना शंकरशास्त्रिणा
चिकित्सकेन परिशोधिता ।






चिकित्सितं वह्निवेश स्वस्थातुरहितंप्रति ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ॥

संवर्द्धको दृढबलः ।

महाम्बायां (मुम्बय्यां)
निर्णयसागराख्यमुद्रणालयाधिपतिना स्वीयाङ्कनालये
मुद्रयित्वा प्रकाशिता ।





मूल्यं रूप्यकद्वयम् ।

# भूमिका।

इह खलु सकलविद्याविलासधामनि भारते वर्षे पाणिनि-गौतम-जैमिनिवादरायणादिमहर्षयः किल हरिहिरण्यगर्भाद्यंशावतारभूताः प्रादुर्बभूवुः। सर्वे ते ह्यशेषविद्यापारावारपारदृश्वानः सर्वज्ञकल्पा नूनं जनस्तोमसमनुग्रहवाञ्छया व्याकरण-न्याय-मीमांसादिनानाशास्त्रेषु परश्शतसङ्ख्याकान्निबन्धरत्नान्रचयाम्बभूवुः। परमकारुणिकैस्तैरात्रेयप्रभृतिभी रोगोद्बाधितनरानुद्वीक्ष्य शास्त्रान्तरेष्विव चिकित्साशास्त्रेष्वपि बहवः प्रबन्धा आरचिताः। नितान्तनिश्रेयस्साधनसम्पत्सम्पन्ना एत एव भूमण्डलगतविविधदेशीयपण्डितैर्निजनिजदेशभाषायां यथामत्यनुवादिताः। भारतीयचिकित्साशास्त्रमूलीभूता एव अरब-यूनान प्रभृतिदेशानां रुक्प्रतिक्रियारीतिरित्यत्राधुनिकशोधकाग्रणीनां नाम यूरोपीयविदुषामपि नास्ति काचिद्विप्रतिपत्तिः। आदिकाले न कोऽप्येवं मेधावी समजनि भारतेतरविषयेषु यः खल्वनवलम्ब्य भारतीयनिबन्धान्निजस्वतन्त्रप्रज्ञया ग्रन्थान्काँश्चिद्रचयाम्बभूव। भारतीयनिबन्धानुवादतात्पर्यादीनवगम्य विषयान्तरवासिनो जना भारतीयविद्याकामुकतरा भूत्वाऽस्मज्जनपदे नानाव्याजैरागतवन्तो विविधोपायैः सङ्गृहीत्वास्मद्ग्रन्थनिचयान्निजनिजदेशं प्रापयामासुः। इदानीमपि ते बाहुल्येन यूरोपान्तर्गतजर्मनीदेशविशेषे वर्तन्ते। सभाष्यऋग्वेदस्य प्रथममुद्रितपुस्तकं किल मोक्षमूलरमुद्रापितं यूरोपत एवात्रागतम्। तदन्वत्र तस्य मुद्रणप्रसारो जातः। बौधायनीयधर्मसूत्रन्तु जर्मनीदेश एव मुद्रितमिति सार्वजनीनमेतत्। एतादृशा बहवोऽप्यपूर्वतरा ग्रन्थास्तत्रेदानीमुपलभ्यन्ते ये खल्वत्र नाम्नाऽप्यप्रसिद्धाः सन्ति। उक्तरीत्याऽस्माकं महती प्राचीनग्रन्थराशिर्विलयमुपगता। ततोऽनन्तरमौरंगजिब् प्रमुखैः कतिपयमुगलमहाराजैर्भारतीयविद्याधर्मप्रतिभटैरस्मद्गीर्वाणग्रन्थास्त्व-

परिसङ्ख्येयाः साक्षात्प्रज्वालिता एव । अतोऽपि महती हानिः संवृत्ता । तदन्विदानीन्तनाङ्ग्लप्रभुभिरियं भारतवसुन्धरा सनाथीकृता । तैर्हि राजकीयवैद्यकपाठशालासंस्थापनपुरस्सरं निजाभिमतयूरोपीयचिकित्साशास्त्रस्यैव सम्प्रसारः कृतः । यद्राज्ञःप्रियं तदेव राष्ट्रस्येति सामान्यन्यायाद्राजकीयभिषक्पदवीलोलुपा अपि भारतवर्षीया निजकुलपरम्परागतमतिप्राचीनमलौकिकं गीवार्णचिकित्साशास्त्रमवहेलनशीला आङ्ग्लचिकित्साशास्त्राध्ययन एव संलग्ना बभूवुः । अतो हेतोरस्मद्भारतीयचिकित्साशास्त्रस्य पठनपाठनप्रचारोऽपीदानीं लुप्तप्राय एव संदृश्यते । एतावता दुर्दैववशाद्विलयमुपागतवत्स्वपरिमितप्रबन्धरत्नेषु समुपस्थितावपि सकलसंहारहेतौ हन्त समाधानजनकश्चैतदद्यापि चरक–सुश्रुत–हारीत-वाग्भटादिप्रणीताः कतिपयलोकोत्तरार्यवैद्यकग्रन्थाः केवलंतु निजगुणमाहात्म्यातिशयेनैव विराजन्ते । उपलब्धेषु तेषु मध्ये चरकसंहिताभिधानोऽयं ग्रन्थः प्राचीनतमः पूज्यतमः परमसन्माननीयो यावद्वैद्यकविषयाणामाकरः सर्वोपरि विराजते । न खल्वियं संहिताऽस्माकं भारतीयानामेव केवलं मान्या अपि तु यूरोप–अमेरिकादिद्वीपान्तरीयाङ्ग्लभिषक्शिरोमणिभिरपि तस्याः परमादरः क्रियत इति नः प्रत्यक्षं सर्वेषाम् । गतकतिपयवर्षेभ्योऽमेरिकान्तर्गत सॅनफ्रान्सिस्कोनगरस्थकतिपयप्रतीततरभिषक्श्रेष्ठैश्चरकाद्यार्यवैद्यकग्रन्थानां विधिवदध्ययनार्थमेका 'आयुर्वेदपाठशाला' संस्थापिताऽस्तीति सुप्रसिद्धमेतत्समाचारपत्रादिषु । सम्प्रति यदा हि द्वीपान्तरीयकृतधियो विपश्चितोऽस्मदीयचिकित्साशास्त्रमाहात्म्यमतितरामुपगायन्ति तदा आर्यवंशसमुद्भवा अप्यनाघ्रातार्यवैद्यकग्रन्था भूयांसः किल पण्डितम्मन्या कूपमण्डूकन्यायेन 'अप्रयोजकमिदमार्यवैद्यकमसारतरं तत्वावबोधविहीनं शास्त्रसंज्ञाया अप्यनर्हमिति' प्रलपन्ति । हन्त महद्दौर्भाग्यमिदं भारतवर्षस्य यदेते नव्यशिक्षितमहापुरुषा निष्कारणमेवालौकिकप्रज्ञेषु प्राचीनार्यपुरुषेष्वज्ञत्वारोपं कृत्वा तत्प्रणीतालौकिकग्रन्थांस्तिरस्कुर्वन्ति । अस्त्वेतत्प्रकृतमनुसरामः ।

अस्यां संहितायां भगवान्कृष्णात्रेयो वक्ता अग्निवेशस्तत्प्रधानशिष्यः श्रोता व्याकरणमहाभाष्यकृत्पतञ्जल्यपरनामधेयश्चरकमुनिः प्रतिसंस्कर्ता च। तस्मादियं गुरु–शिष्य–प्रतिसंस्कर्तृसूत्रमयीत्यर्थतोऽवगन्तव्यम्। पुरा किल कृतयुगान्तेऽसुरनिपीडिता आर्यास्तत्रैव पञ्चालक्षेत्रे पञ्चनदप्रदेशे समापतिता वारिवायुक्षेत्रनगनदतरुलताद्यशेषविधप्रकृतिसौन्दर्यस्वभावगुणविमोहिताः कृतनिवसतयः क्रमेण समाजबन्धनपुरस्सरं तदुपयोगिजीवनोपायभूतकृषिरीतिनीतिस्वास्थ्यविधानादिषु सन्ततसमालोचनया क्षत्रियादिसम्प्रदायविभक्ताः स्वस्वकार्येषु निरता आसन् ( ऐतरेय ब्राह्मणः ) तेषु चिकित्सासम्प्रदायाध्यक्षेण महर्षिणा भरद्वाजेण रोगाक्रान्तायां मेदिन्यां लोकहितायायुर्वेदः स्वर्लोकादानीतः स्वशिष्याय कृष्णात्रेयायोपदिष्टः सोपि तमग्निवेशादिशिष्यषट्कायोपदिष्टवान् । अथ ते शिष्याः पृथक्पृथक् षट् तन्त्राणि चक्रुस्तेषु प्रधानशिष्याग्निवेशकृततन्त्रमुत्कृष्टमुपादेयं चाजनि ।

अथ कदाचिच्चरकमुनिः पञ्चनददेशे कायचिकित्साप्रधानं तत्तन्त्रं प्रतिसंस्करणमुखेन सविस्तरं वर्णयन्स्वनाम्नाऽभिनवां संहितां प्रचारितवानिति संहिताया एव लभ्यते। "अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते" इति वचनात्। सा चेयमभिनवा संहिता अष्टभिः स्थानैर्विभक्ता। अस्यां च संहितायां खनिजोद्भिज्जप्राणिवाचीनि द्रव्याणि भागत्रयेण विभज्य पुनः प्राणिनो जरायुजादिभागचतुष्टयेन विभक्ताः । उद्भिज्जानिच वनस्पतिवृक्षवीरुधोषधिचतुष्टयेन विभक्तानि। तानिच पुनरुद्भिज्जद्रव्याणि जीवनीयादिपञ्चाशद्गणैः संविभक्तानि । अस्याः सिद्धिकल्पस्थानद्वयं सप्तदशौषधाध्यायैः संयोज्य सम्पूर्णमकरोत्पञ्चनदपुरवास्तव्यो दृढबल इत्यस्या एव संहितायाः सिद्धिस्थानपरिसमाप्तावुक्तम् । यथा "अखण्डार्थं दृढबलो जातः पञ्चनदे पुरे । कृत्वा बहुभ्यस्तन्त्रेभ्यो विशेषाच्च बलोच्चयम् । सप्तदशौषधाध्यायैः सिद्धिकल्पैरपूरयत्"। ग्रन्थस्यास्य महत्वं संहितास्थवचनेनैव सुस्पष्टं भवति "चिकित्सितं वह्निवेश स्वस्थातुरहितम्प्रति । यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्"।

अपरंच "न हि कस्तूरिकागन्धः शपथेनानुभाव्यते" इति न्यायादलमेतावता वर्णनेन ।

निरतिशयोपयोगित्वादस्य ग्रन्थस्य विशेषतो गीर्वाणभाषानभिज्ञलोकोपकारार्थमस्माभिर्महाराष्ट्रभाषायां गतकतिपयवर्षेभ्योऽस्यानुवादमुद्रणं प्रारब्धम् । सानुवादपुस्तकस्याल्पमूल्यालभ्यतयामूलमात्रमभिकाङ्क्षमाणानां चिकित्सकानामितरेषांच चिकित्साशास्त्रेष्वनुरागवतामनुनयमुररीकृत्यास्मत्सुहृत्तमेभ्यो निर्णसागरमुद्रणालयाधिपतिभ्यो निवेदितमस्माभिः प्रकाशनीयोऽयं ग्रन्थ इति । अनवरतदुर्लभाप्रसिद्धतरग्रन्थप्रकाशनेन लब्धकीर्तयश्चतेऽनुकृत्यनिजपितरं नितरां वदान्यतरमङ्गीकृत्यास्मत्सूचनां स्वकीये भारतविश्रुतमुद्रणालये सुरम्यैरायसाक्षरैरिमं परममान्यमहाग्रन्थं मुद्रयाम्बभूवुः । अस्मिन्विषये निर्दिष्टमुद्रणालयाध्यक्षाणां नाम जे. पी. इत्युपाधिधारिश्रीयुततुकारामजावजीमहोदयानामतीवोपकृतयः समुल्लसन्ति । एवमेव तेषामनवरतप्राचीनानुपलब्धग्रन्थप्रकाशनेन सुयशः समुल्लसतुतरामित्यभ्यर्थयामः परमेशम् ।

अस्य ग्रन्थस्य महाराष्ट्रभाषानुवादसमयेऽस्माभिः संशोधनसाधनान्युपलब्धानि तान्येवानायासेन मूलमात्रसंशोधनोपयोगीन्यभूवन् । तथापि कुत्रचित्पदेऽस्मद्दृष्टिदोषादक्षरविनिवेशकदोषाद्वा यदबद्धं भवेत्तत्स्नेहार्द्रहृदयेन पाठकेन कृपया परिशोधनीयमित्यभ्यर्थयामहे ।

अपरंच प्राङ्मुद्रितवाग्भट्टप्रणीताष्टाङ्गहृदयमूलमिवात्रापि यदतीवावश्यकं प्रकरणं तत्र तत्रास्माभिरवतरणचिन्हानि प्रदत्तानि । यद्यपि ग्रन्थबाहुल्यात्संसूचितविषयाणां कण्ठग्रहणासंभवस्तथापि निर्दिष्टस्थलेषु विशेषतः परिशीलयितृभिरवश्यं दृष्टिर्निधेया भवतीति परमार्थः ।

एतादृशो वैद्यकनिबन्धेषु भास्कर इव प्रकाशितोऽयं ग्रन्थः सफलयोगः शीघ्रफलदो निजमहत्वापेक्षयाऽल्पमूल्यलभ्यश्चिकित्सकैरितरैश्च प्राचीनार्यग्रन्थानुरागिभिर्द्रव्यकृपणतां त्यक्त्वा सङ्ग्रहीतव्य इति गरीयसी नो विज्ञप्तिः । एवं प्रचुरप्रचारो भूत्वा ग्रन्थोऽयं प्रकाशकस्य श्रमसाफल्यं वैद्यविद्याया एधाञ्च करोत्विति प्रार्थयामहे जगदीशम् ।

# सूचीपत्रम् ।

'तस्याशितीयः' षष्ठोऽध्यायः ।



'नवेगान्धारणीयः' सप्तमोऽध्यायः ।

'इन्द्रियोपक्रमणीयो'ऽष्टमोऽध्यायः ।

विषयः — पृष्ठाङ्कः

'स्वेदाध्यायः' चतुर्दशः ।



'उपकल्पनीयः' पञ्चदशोऽध्यायः



'चिकित्साप्राभृतीयः' षोडशोऽध्यायः ।

'कियन्तःशिरसीयः' सप्तदशोऽध्यायः ।

---

**'महारोगाध्यायो' विंशतितमः।**

## सप्तविंशोऽन्नपानविधिरध्यायः।

'विविधाशितपीतीयो'ऽष्टाविंशोऽध्यायः ।

---

**'दशप्राणायतनीय' एकोनत्रिंशोऽध्यायः ।**



---

सूत्रस्थानं समाप्तम्

# निदानस्थानम् ।



---

# विमानस्थानम् ।

---

**'रोगभिषग्जितीयविमानम्'– अष्टमोऽध्यायः।**

विमानस्थानं समाप्तम् ।

# शारीरस्थानम् ।

**'अतुल्यगोत्रीयो' द्वितीयोऽध्यायः ।**

---

तृतीयः 'खुड्डीकागर्भावक्रान्त्यध्यायः'।

'महती गर्भावक्रान्तिः' चतुर्थोऽध्यायः ।

'पुरुषविचयः' पञ्चमोऽध्यायः ।

'शरीरसङ्ख्या' भिधानसप्तमोऽध्यायः ।



'जातिसूत्रीय' अष्टमोऽध्यायः ।

# इन्द्रियस्थानम् ।

# चिकित्सितस्थानम् ।

---

'रक्तपित्तचिकित्सितं' चतुर्थोऽध्यायः ।



---

## 'राजयक्ष्मचिकित्सितं' अष्टमोऽध्यायः ।

## 'अर्शश्चिकित्सितं' नवमोऽध्यायः

---

## 'अतीसारचिकित्सितं' दशमोऽध्यायः ।

---

# कल्पस्थानम् ।



# सिद्धिस्थानम् ।



# चरकसंहितायां

## सूत्रस्थानम् ।

### प्रथमोऽध्यायः ।

अर्वाचीनं पदमधिवसन्यो गुणग्रावयुक्तो
वामाङ्गार्धे प्रविशति सदापर्णया[1] बद्धकेलिः ।
यश्चाभेद्यो विगतकरणः केवलं ज्ञानमूर्तिः
सोयं शान्तं पदमधिगतः पातु वः शूलपाणिः

अथातो दीर्घजीवितीयमध्यायं व्याख्यास्या[म इति ह स्माह भगवानात्रेयः ॥ १ ॥]

दीर्घजीवितमन्विच्छन्भरद्वाज उपागमत् ।
इन्द्रमुग्रतपा बुद्ध्वा शरण्यममरेश्वरम् ॥ २ ॥
ब्रह्मणा हि यथा प्रोक्तमायुर्वेदं प्रजापतिः ।
जग्राह निखिलेनादावश्विनौ तु पुनस्ततः ॥ ३ ॥
अश्विभ्यां भगवाञ्छक्रः प्रतिपेदे ह केवलम् ।
ऋषिप्रोक्तो भरद्वाजस्तस्माच्छक्रमुपागमत् ॥ ४ ॥
विघ्नीभूता यदा रोगाः प्रादुर्भूताः शरीरिणाम् ।
तपोपवासाध्ययनब्रह्मचर्यव्रतायुषाम् ॥ ५ ॥
तदा भूतेष्वनुक्रोशं पुरस्कृत्य महर्षयः ।
समेताः पुण्यकर्माणः पार्श्वे हिमवतः शुभे ॥ ६ ॥
अङ्गिरा जमदग्निश्च वसिष्ठः काश्यपो भृगुः ।
आत्रेयो गौतमः सांख्यः पुलस्त्यो नारदोऽसितः ॥ ७ ॥
अगस्त्यो वामदेवश्च मार्कण्डेयाश्वलायनौ ।
परीक्षिर्भिक्षुरात्रेयो भरद्वाजः कपिञ्जलः ॥ ८ ॥

---

१ सुविरचितया.

विश्वामित्राश्वरथ्यौ च भार्गवश्च्यवनोऽभिजित् ।
गार्ग्यः शाण्डिल्यकौण्डिन्यौ वार्क्षिर्देवलगालवौ ॥ ९ ॥
सांकृत्यो बैजवापिश्च कुशिको बादरायणः ।
बडिशः शरलोमा च काप्यकात्यायनावुभौ ॥ १० ॥
काङ्कायनः कैकशेयो धौम्यो मारीचिकाश्यपौ ।
शर्कराक्षो हिरण्याक्षो लौगाक्षिः पैङ्गिरेव च ॥ ११ ॥
शौनकः शाकुनेयश्च मैत्रेयो मैमतायनिः ।
वैखानसा वालखिल्यास्तथा चान्ये महर्षयः ॥ १२ ॥
ब्रह्मज्ञानस्य निधयो दमस्य नियमस्य च ।
तपसस्तेजसा दीप्ता हूयमाना इवाग्नयः ॥ १३ ॥
सुखोपविष्टास्ते तत्र पुण्यां चक्रुरिमां कथाम् ।
"धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ॥ १४ ॥
रोगास्तस्यापहर्तारः श्रेयसो जीवितस्य च ।"
प्रादुर्भूतो मनुष्याणामन्तरायो महानयम् ॥ १५ ॥
कः स्यात्तेषां शमोपाय इत्युक्त्वा ध्यानमास्थिताः ।
अथ ते शरणं शक्रं ददृशुर्ध्यानचक्षुषा ॥ १६ ॥
स वक्ष्यति शमोपायं यथावदमरप्रभुः ।
कः सहस्राक्षभवनं गच्छेत्प्रष्टुं शचीपतिम् ॥ १७ ॥
अहमर्थे नियुज्येयमत्रेति प्रथमं वचः ।
भरद्वाजोऽब्रवीत्तस्मादृषिभिः स नियोजितः ॥ १८ ॥
स शक्रभवनं गत्वा सुरर्षिगणमध्यगम् ।
ददर्श बलहन्तारं दीप्यमानमिवानलम् ॥ १९ ॥
सोऽभिगम्य जयाशीर्भिरभिनन्द्य सुरेश्वरम् ।
प्रोवाच भगवान्धीमानृषीणां वाक्यमुत्तमम् ॥ २० ॥
व्याधयो हि समुत्पन्नाः सर्वप्राणिभयंकराः ।
तद्ब्रूहि मे शमोपायं यथावदमरप्रभो ॥ २१ ॥
तस्मै प्रोवाच भगवानायुर्वेदं शतक्रतुः ।
"पदैरल्पैर्मतिं बुद्ध्वा विपुलां परमर्षये ॥ २२ ॥
हेतुलिङ्गौषधज्ञानं स्वस्थातुरपरायणम् ।

त्रिसूत्रं शाश्वतं पुण्यं बुबुधे यं पितामहः ॥ २३ ॥
सोऽनन्तपारं त्रिस्कन्दमायुर्वेदं महामतिः ।
यथावदचिरात्सर्वं बुबुधे तन्मना मुनिः ॥ २४ ॥
तेनायुरमितं लेभे भरद्वाजः सुखान्वितः ।
ऋषिभ्योऽनधिकं तच्च शशंसानवशेषयन् ॥ २५ ॥
ऋषयश्च भरद्वाजाज्जगृहुस्तं प्रजाहितम् ।
दीर्घमायुश्चिकीर्षन्तो वेदं वर्धनमायुषः ॥ २६ ॥
महर्षयस्ते ददृशुर्यथावज्ज्ञानचक्षुषा ।
सामान्यं च विशेषं च गुणान्द्रव्याणि कर्म च ॥ २७ ॥
समवायं च तज्ज्ञात्वा तन्त्रोक्तं विधिमास्थिताः ।
लेभिरे परमं शर्म जीवितं चापि[1] निर्गदम् ॥ २८ ॥
अथ मैत्रीपरः पुण्यमायुर्वेदं पुनर्वसुः ।
शिष्येभ्यो दत्तवान्षड्भ्यः सर्वभूतानुकम्पया ॥ २९ ॥
अग्निवेशश्च भेलश्च जतूकर्णः पराशरः ।
हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्वचः ॥ ३० ॥
बुद्धेर्विशेषस्तत्रासीन्नोपदेशान्तरं मुनेः ।
तन्त्रप्रणेता प्रथममग्निवेशो यतोऽभवत् ॥ ३१ ॥
अथ भेलादयश्चक्रुः स्वं स्वं तन्त्रं कृतानि च ।
श्रावयामासुरात्रेयं सर्षिसङ्घं सुमेधसः ॥ ३२ ॥
श्रुत्वा सूत्रणमर्थानामृषयः पुण्यकर्मणाम् ।
यथावत्सूत्रितमिति प्रहृष्टास्तेऽनुमेनिरे ॥ ३३ ॥
सर्व एवास्तुवंस्तांश्च सर्वभूतहितैषिणः ।''
साधुभूतेष्वनुक्रोश इत्युच्चैरब्रुवन्समम् ॥ ३४ ॥
तं पुण्यं शुश्रुवुः शब्दं दिवि देवर्षयः स्थिताः ।
सामराः परमर्षीणां श्रुत्वा मुमुदिरे परम् ॥ ३५ ॥
अहो साध्विति घोषश्च लोकांस्त्रीनन्ववादयत् ।
नभसि स्निग्धगम्भीरो हर्षाद्भूतैरुदीरितः ॥ ३६ ॥

---

१ चाप्यनश्वरम्.

शिवो वायुर्ववौ सर्वा भाभिरुन्मीलिता दिशः ।
निपेतुः सजलाश्चैव दिव्याः कुसुमवृष्टयः ॥ ३७ ॥
अथाग्निवेशप्रमुखान्विविशुर्ज्ञानदेवताः ।
बुद्धिः सिद्धिः स्मृतिर्मेधा धृतिः कीर्तिः क्षमा दया ॥ ३८ ॥
तानि चानुमतान्येषां तन्त्राणि परमर्षिभिः ।
भवाय भूतसङ्घानां प्रतिष्ठां भुवि लेभिरे ॥ ३९ ॥
"हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् ।
मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते ॥ ४० ॥
शरीरेन्द्रियसत्त्वात्मसंयोगो धारि जीवितम् ।
नित्यगश्चानुबन्धश्च पर्यायैरायुरुच्यते ॥ ४१ ॥
तस्यायुषः पुण्यतमो वेदो वेदविदां मतः ।
वक्ष्यते यन्मनुष्याणां लोकयोरुभयोर्हितः ॥ ४२ ॥
सर्वदा सर्वभावानां सामान्यं वृद्धिकारणम् ।
ह्रासहेतुर्विशेषश्च प्रवृत्तिरुभयस्य तु ॥ ४३ ॥
सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृत् ।
तुल्यार्थता हि सामान्यं विशेषस्तु विपर्ययः ॥ ४४ ॥
सत्त्वमात्मा शरीरं च त्रयमेतत्त्रिदण्डवत् ।
लोकास्तिष्ठन्ति संयोगात्तत्र सर्वं प्रतिष्ठितम् ॥ ४५ ॥
स पुमांश्चेतनं तच्च तच्चाधिकरणं स्मृतम् ।
वेदस्यास्य तदर्थं हि वेदोऽयं संप्रकाशितः ॥ ४६ ॥
खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः ।
सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम् ॥ ४७ ॥
सार्था गुर्वादयो बुद्धिः प्रयत्नान्ताः परादयः ।
गुणाः प्रोक्ताः प्रयत्नादि कर्म चेष्टितमुच्यते ॥ ४८ ॥
समवायोऽपृथग्भावो द्रव्यादीनां गुणैर्मतः ।
स नित्यो यत्र हि द्रव्यं न तत्रानियतो गुणः ॥ ४९ ॥
यत्राश्रिताः कर्मगुणाः कारणं समवायि यत् ।
तद्द्रव्यं समवायी तु निश्चेष्टः कारणं गुणः ॥ ५० ॥
संयोगे च वियोगे च कारणं द्रव्यमाश्रितम् ।

कर्तव्यस्य क्रिया कर्म कर्म नान्यदपेक्षते ॥ ५१ ॥
इत्युक्तं कारणं कार्यं धातुसाम्यमिहोच्यते ।
धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम् ॥ ५२ ॥
कालबुद्धीन्द्रियार्थानां योगो मिथ्या न चाति च ।
द्वयाश्रयाणां व्याधीनां त्रिविधो हेतुसंग्रहः ॥ ५३ ॥
शरीरं सत्त्वसंज्ञं च व्याधीनामाश्रयो मतः ।
तथा सुखानां योगस्तु सुखानां कारणं समः ॥ ५४ ॥
निर्विकारः परस्त्वात्मा सत्त्वभूतगुणेन्द्रियैः ।
चैतन्ये कारणं नित्यो द्रष्टा पश्यति हि क्रियाः ॥ ५५ ॥
वायुः पित्तं कफश्चोक्तः शारीरो दोषसंग्रहः ।
मानसः पुनरुद्दिष्टो रजश्च तम एव च ॥ ५६ ॥
प्रशाम्यत्यौषधैः पूर्वो दैवयुक्तिव्यपाश्रयैः ।
मानसो ज्ञानविज्ञानधैर्यस्मृतिसमाधिभिः ॥ ५७ ॥
रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः ।
विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति ॥ ५८ ॥
सस्नेहमुष्णं तीक्ष्णं च द्रवमम्लं सरं कटु ।
विपरीतगुणैः पित्तं द्रव्यैराशु प्रशाम्यति ॥ ५९ ॥
गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलाः ।
श्लेष्मणः प्रशमं यान्ति विपरीतगुणैर्गुणाः ॥ ६० ॥
विपरीतगुणैर्देशमात्राकालोपपादितैः ।
भेषजैर्विनिवर्तन्ते विकाराः साध्यसंमताः ॥ ६१ ॥
साधनं नत्वसाध्यानां व्याधीनामुपदिश्यते ।
भूयश्चातो यथाद्रव्यं गुणकर्म प्रवक्ष्यते ॥ ६२ ॥
रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा ।
निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः ॥ ६३ ॥
स्वादुरम्लोऽथ लवणः कटुकस्तिक्त एव च ।
कषायश्चेति षट्कोऽयं रसानां संग्रहः स्मृतः ॥ ६४ ॥
स्वाद्वम्ललवणा वायुं कषायस्वादुतिक्तकाः ।
जयन्ति पित्तं श्लेष्माणं कषायकटुतिक्तकाः ॥ ६५ ॥

किंचिद्दोषप्रशमनं किंचिद्धातुप्रदूषणम् ।
स्वस्थवृत्तौ हितं किंचिद्द्रव्यं त्रिविधमुच्यते ॥ ६६ ॥
तत्पुनस्त्रिविधं ज्ञेयं जाङ्गमौद्भिदपार्थिवम् ।
मधूनि गोरसाः पित्तं वसा मज्जासृगामिषम् ॥ ६७ ॥
विण्मूत्रं चर्मरेतोऽस्थि स्नायु शृङ्गं खुरा नखाः ।
जङ्गमेभ्यः प्रयुज्यन्ते केशा लोमानि रोचनाः ॥ ६८ ॥
सुवर्णं समलाः पञ्च लोहाः ससिकताः सुधा ।
मनःशिलाले मणयो लवणं गैरिकाञ्जने ॥ ६९ ॥
भौममौषधमुद्दिष्टमौद्भिदं तु चतुर्विधम् ।
वनस्पतिर्वीरुधश्च वानस्पत्यस्तथौषधी ॥ ७० ॥
फलैर्वनस्पतिः पुष्पैर्वानस्पत्यः फलैरपि ।
ओषध्यः फलापाकान्ताः प्रतानैर्वीरुधः स्मृताः ॥ ७१ ॥
मूलत्वक्सारनिर्यासनालस्वरसपल्लवाः ।
क्षाराः क्षीरं फलं पुष्पं भस्म तैलानि कण्टकाः ॥ ७२ ॥
पत्राणि शुङ्गाः कन्दाश्च प्ररोहाश्चौद्भिदो गणः ।
मूलिन्यः षोडशैकोनाः फलिन्यो विंशतिः स्मृताः ॥ ७३ ॥
महास्नेहाश्च चत्वारः पञ्चैव लवणानि च ।
अष्टौ मूत्राणि सङ्ख्यातान्यष्टावेव पयांसि च ॥ ७४ ॥
शोधनार्थाश्च षड्वृक्षाः पुनर्वसुनिदर्शिताः ।
य एतान्वेत्ति संयोक्तुं विकारेषु स वेदवित् ॥ ७५ ॥
हस्तिदन्ती हैमवती श्यामा त्रिवृदधो गुडा ।
सप्तला श्वेतनामा च प्रत्यक्श्रेणी गवाक्ष्यपि ॥ ७६ ॥
ज्योतिष्मती च बिम्बी च शणपुष्पी विषाणिका ।
अजगन्धा द्रवन्ती च क्षीरिणी चात्र षोडशी ॥ ७७ ॥
शणपुष्पी च बिम्बी च छर्दने हैमवत्यपि ।
श्वेता ज्योतिष्मती चैव योज्या शीर्षविरेचने ॥ ७८ ॥
एकादशावशिष्टा याः प्रयोज्यास्ता विरेचने ।
इत्युक्ता नामकर्मभ्यां मूलिन्यः फलिनीः शृणु ॥ ७९ ॥
शङ्खिन्यथ विडङ्गानि त्रपुषं मदनानि च ।

आनूपं स्थलजं चैव क्रीतकं द्विविधं स्मृतम् ॥ ८० ॥
प्रकीर्या चोदकीर्या च प्रत्यक्पुष्पी तथाभया ।
अन्तःकोटरपुष्पी च हस्तिपर्ण्याश्च शारदम् ॥ ८१ ॥
कम्पिल्लकारग्वधयोः फलं यत्कुटजस्य च ।
धामार्गवमथेक्ष्वाकुजीमूतं कृतवेधनम् ॥ ८२ ॥
मदनं कुटजं चैव त्रपुषं हस्तिपर्णिनी ।
एतानि वमने चैव योज्यान्यास्थापनेषु च ॥ ८३ ॥
नस्तः प्रच्छर्दने चैव प्रत्यक्पुष्पी विधीयते ।
दश यान्यवशिष्टानि तान्युक्तानि विरेचने ॥ ८४ ॥
नामकर्मभिरुक्तानि फलान्येकोनविंशतिः ।
सर्पिस्तैलं वसा मज्जा स्नेहो दृष्टश्चतुर्विधः ॥ ८५ ॥
पानाभ्यञ्जनबस्त्यर्थं नस्यार्थं चैव योगतः ।
स्नेहना जीवना बल्या वर्णोपचयवर्धनाः ॥ ८६ ॥
स्नेहा ह्येते च विहिता वातपित्तकफापहाः ।
सौवर्चलं सैन्धवं च बिडमौद्भिदमेव च ॥ ८७ ॥
सामुद्रेण सहैतानि पञ्च स्युर्लवणानि च ।
स्निग्धान्युष्णानि तीक्ष्णानि दीपनीयतमानि च ॥ ८८ ॥
आलेपनार्थे युज्यन्ते स्नेहस्वेदविधौ तथा ।
अधोभागोर्ध्वभागेषु निरूहेष्वनुवासने ॥ ८९ ॥
अभ्यञ्जने भोजनार्थे शिरसश्च विरेचने ।
शस्त्रकर्मणि बस्त्यर्थमञ्जनोत्सादनेषु च ॥ ९० ॥
अजीर्णानाहयोर्वाते गुल्मे शूले तथोदरे ।
उक्तानि लवणान्यूर्ध्वं मूत्राण्यष्टौ निबोध मे ॥ ९१ ॥
मुख्यानि यानि चेष्टानि सर्वाण्यात्रेयशासने ।
अविमूत्रमजामूत्रं गोमूत्रं माहिषं तथा ॥ ९२ ॥
हस्तिमूत्रमथोष्ट्रस्य हयस्य च खरस्य च ।
उष्णं तीक्ष्णमथो रूक्षं कटुकं लवणान्वितम् ॥ ९३ ॥
मूत्रमुत्सादने युक्तं युक्तमालेपनेषु च ।
युक्तमास्थापने मूत्रं युक्तं चापि विरेचने ॥ ९४ ॥

स्वेदेष्वपि च तद्युक्तमानाहेषु गदेषु च ।
उदरेष्वथ चार्शःसु गुल्मकुष्ठकिलासिषु ॥ ९५ ॥
तद्युक्तमुपनाहेषु परिषेके तथैव च ।
दीपनीयं विषघ्नं च क्रिमिघ्नं चोपदिश्यते ॥ ९६ ॥
पाण्डुरोगोपसृष्टानामुत्तमं सर्वथोच्यते ।
श्लेष्माणं शमयेत्पीतं मारुतं चानुलोमयेत् ॥ ९७ ॥
कर्षेत्पित्तमधोभागमित्यस्मिन्गुणसंग्रहः ।
सामान्येन मयोक्तस्तु पृथक्त्वेन प्रवक्ष्यते ॥ ९८ ॥
अविमूत्रं सतिक्तं स्यात्स्निग्धं पित्ताविरोधि च ।
आजं कषायमधुरं पथ्यं दोषान्निहन्ति च ॥ ९९ ॥
गव्यं समधुरं किंचिद्दोषघ्नं क्रिमिकुष्ठनुत् ।
कण्डूघ्नं शमयेत्पीतं सम्यग्दोषोदरे हितम् ॥ १०० ॥
अर्शःशोफोदरघ्नं तु सक्षारं माहिषं सरम् ।
हास्तिकं लवणं मूत्रं हितं तु क्रिमिकुष्ठिनाम् ॥ १०१ ॥
प्रशस्तं बद्धविण्मूत्रविषश्लेष्मामयार्शसाम् ।
सतिक्तं श्वासकासघ्नमर्शोघ्नं चौष्ट्रमुच्यते ॥ १०२ ॥
वाजिनां तिक्तकटुकं कुष्ठव्रणविषापहम् ।
खरमूत्रमपस्मारोन्मादग्रहविनाशनम् ॥ १०३ ॥
इतीहोक्तानि मूत्राणि यथा सामर्थ्ययोगतः ।
अतः क्षीराणि वक्ष्यन्ते कर्म चैषां गुणाश्च ये ॥ १०४ ॥
अविक्षीरमजाक्षीरं गोक्षीरं माहिषं च यत् ।
उष्ट्रीणामथ नागीनां वडवायाः स्त्रियास्तथा ॥ १०५ ॥
प्रायशो मधुरं स्निग्धं शीतं स्तन्यं पयः स्मृतम् ।
प्रीणनं बृंहणं वृष्यं मेध्यं बल्यं मनस्करम् ॥ १०६ ॥
जीवनीयं श्रमहरं श्वासकासनिबर्हणम् ।
हन्ति शोणितपित्तं च संधानं विहतस्य च ॥ १०७ ॥
सर्वप्राणभृतां सात्म्यं शमनं शोधनं तथा ।
तृष्णाघ्नं दीपनीयं च श्रेष्ठं क्षीणक्षतेषु च ॥ १०८ ॥
पाण्डुरोगेऽम्लपित्ते च शोषे गुल्मे तथोदरे ।

अतीसारे ज्वरे दाहे श्वयथौ च विधीयते ॥ १०९ ॥
योनिशुक्रप्रदोषेषु मूत्रेषु प्रदरेषु च ।
पुरीषे ग्रथिते पथ्यं वातपित्तविकारिणाम् ॥ ११० ॥
नस्यालेपावगाहेषु वमनास्थापनेषु च ।
विरेचने स्नेहने च पयः सर्वत्र युज्यते ॥ १११ ॥
यथाक्रमं क्षीरगुणानेकैकस्य पृथक्पृथक् ।
अन्नपानादिकेऽध्याये भूयो वक्ष्याम्यशेषतः ॥ ११२ ॥
अथापरे त्रयो वृक्षाः पृथग्ये फलमूलिभिः ।
स्नुह्यर्काश्मन्तकास्तेषामिदं कर्म पृथक्पृथक् ॥ ११३ ॥
वमनेऽश्मन्तकं विद्यात्स्नुहीक्षीरं विरेचने ।
क्षीरमर्कस्य विज्ञेयं वमने सविरेचने ॥ ११४ ॥
इमांस्त्रीनपरान्वृक्षानाहुर्येषां हितास्त्वचः ।
पूतिकः कृष्णगन्धा च तिल्वकश्च तथा तरुः ॥ ११५ ॥
विरेचने प्रयोक्तव्यः पूतिकस्तिल्वकस्तथा ।
कृष्णगन्धा परीसर्पे शोथेष्वर्शःसु चोच्यते ॥ ११६ ॥
दद्रुविद्रधिगण्डेषु कुष्ठेष्वप्यलजीषु च ।
षड्वृक्षाञ्छोधनानेतानपि विद्याद्विचक्षणः ॥ ११७ ॥
इत्युक्ताः फलमूलिन्यः स्नेहाश्च लवणानि च ।
मूत्रं क्षीराणि वृक्षाश्च षड्ये दृष्टाः पयस्त्वचः ॥ ११८ ॥
औषधीर्नामरूपाभ्यां जानते ह्यजपा वने ।
अविपाश्चैव गोपाश्च ये चान्ये वनवासिनः ॥ ११९ ॥
न नामज्ञानमात्रेण रूपज्ञानेन वा पुनः ।
औषधीनां परां प्राप्तिं कश्चिद्वेदितुमर्हति ॥ १२० ॥
योगज्ञस्तस्य रूपज्ञस्तासां तत्त्वविदुच्यते ।"
किं पुनर्यो विजानीयादोषधीः सर्वथा भिषक् ॥ १२१ ॥
रूपं तासां तु यो विद्याद्देशकालोपपादितम् ।
पुरुषं पुरुषं वीक्ष्य स विज्ञेयो भिषक्तमः ॥ १२२ ॥
यथा विषं यथा शस्त्रं यथाग्निरशनिर्यथा ।
तथौषधमविज्ञातं विज्ञातममृतं यथा ॥ १२३ ॥

औषधं ह्यनभिज्ञातं नामरूपगुणैस्त्रिभिः ।
विज्ञातं वापि दुर्युक्तं युक्तिबाह्येन भेषजम् ॥ १२४ ॥
योगादपि विषं तीक्ष्णमुत्तमं भेषजं भवेत् ।
भेषजं वापि दुर्युक्तं तीक्ष्णं संपद्यते विषम् ॥ १२५ ॥
तस्मान्न भिषजा युक्तं युक्तिबाह्येन भेषजम् ।
धीमता किंचिदादेयं जीवितारोग्यकाङ्क्षिणा ॥ १२६ ॥
कुर्यान्निपतितो मूर्ध्नि सशेषं वासवाशनिः ।
सशेषमातुरं कुर्यान्न त्वज्ञमतमौषधम् ॥ १२७ ॥
दुःखिताय शयानाय श्रद्दधानाय रोगिणे ।
यो भेषजमविज्ञाय प्राज्ञमानी प्रयच्छति ॥ १२८ ॥
तस्यैव[1] मृत्युदूतस्य दुर्मतेस्त्यक्तधर्मणः ।
नरो नरकपाती स्यात्तस्य संभाषणादपि ॥ १२९ ॥
वरमाशीविषविषं क्वथितं ताम्रमेव वा ।
पीतमत्यग्निसंतप्ता भक्षिता वाप्ययोगुडाः ॥ १३० ॥
न तु श्रुतवतां वेषं बिभ्रता शरणागतात् ।
गृहीतमन्नं पानं वा वित्तं वा रोगपीडितात् ॥ १३१ ॥
भिषग्बुभूर्षुर्मतिमानतः स्वगुणसंपदि ।
परं प्रयत्नमातिष्ठेत्प्राणदः स्याद्यथा नृणाम् ॥ १३२ ॥
तदेव युक्तं भैषज्यं यदारोग्याय कल्पते ।
स चैव भिषजां श्रेष्ठो रोगेभ्यो यः प्रमोचयेत् ॥ १३३ ॥
सम्यक्प्रयोगं सर्वेषां सिद्धिराख्याति कर्मणाम् ।
सिद्धिराख्याति सर्वैश्च गुणैर्युक्तं भिषक्तमम् ॥ १३४ ॥

इति ।

तत्र श्लोकाः ।

आयुर्वेदागमो हेतुरागमस्य प्रवर्तनम् ।
सूत्रणस्याभ्यनुज्ञानमायुर्वेदस्य निर्णयः ॥ १३५ ॥
संपूर्णं कारणं ज्ञेयमायुर्वेदप्रयोजनम् ।

---

१ त्यक्तधर्मस्य पापस्य मृत्युभूतस्य दुर्मतेः ।

हेतवश्चैव दोषाश्च भेषजं संग्रहेण च ॥ १३६ ॥
रसाः सप्रत्यया द्रव्यास्त्रिविधो द्रव्यसंग्रहः ।
मूलिन्यश्च फलिन्यश्च स्नेहाश्च लवणानि च ॥ १३७ ॥
मूत्रं क्षीराणि वृक्षाश्च षड्ये क्षीरत्वगाश्रयाः ।
कर्माणि चैषां सर्वेषां योगायोगगुणागुणाः ॥ १३८ ॥
वैद्यापवादो यत्रस्थाः सर्वे च भिषजां गुणाः ।
सर्वमेतत्समाख्यातं पूर्वाऽध्याये महर्षिणा ॥ १३९ ॥

इति दीर्घजीवितीयो नाम प्रथमोऽध्यायः ॥ १ ॥

---

# द्वितीयोऽध्यायः ।

## अथातोऽपामार्गतण्डुलीयमध्यायं व्याख्यास्यामः ।
## इति ह स्माह भगवानात्रेयः ।

"अपामार्गस्य बीजानि पिप्पलीमरिचानि च ।
विडङ्गान्यथ शिग्रूणि सर्षपांस्तुम्बुरूणि च ॥ १ ॥
अजाजीं चाजगन्धां च पीलून्येलां हरेणुकाम् ।
पृथ्वीकां सुरसां श्वेतां कुठेरकफणिज्जकौ ॥ २ ॥
शिरीषबीजं लशुनं हरिद्रे लवणद्वयम् ।
ज्योतिष्मतीं नागरं च दद्याच्छीर्षविरेचने ॥ ३ ॥
गौरवे शिरसः शूले पीनसेऽर्धावभेदके ।
क्रिमिव्याधावपस्मारे घ्राणनाशे प्रमोहके ॥ ४ ॥
मदनं मधुकं निम्बं जीमूतं कृतवेधनम् ।
पिप्पलीकुटजेक्ष्वाकूण्येलां धामार्गवाणि च ॥ ५ ॥
उपस्थिते श्लेष्मपित्ते व्याधावामाश्रयाश्रये ।
वमनार्थं प्रयुञ्जीत भिषग्देहमदूषयन् ॥ ६ ॥
त्रिवृतां त्रिफलां दन्तीं नीलिनीं सप्तलां वचाम् ।
कम्पिल्लकं गवाक्षीं च क्षीरिणीमुदकीर्यकाम् ॥ ७ ॥
पीलून्यारग्वधं द्राक्षां द्रवन्तीं निचुलानि च ।
पक्वाशयगते दोषे विरेकार्थं प्रयोजयेत् ॥ ८ ॥

पाटलां चाग्निमन्थां च बिल्वं स्योनाकमेव च ।
काश्मर्यं शालपर्णीं च पृश्निपर्णीं निदिग्धिकाम् ॥ ९ ॥
बलाश्वदंष्ट्रां बृहतीमेरण्डं सपुनर्नवाम् ।
यवान्कुलत्थान्कोलानि गुडूचीं मदनानि च ॥ १० ॥
पलाशं कत्तृणं चैव स्नेहांश्च लवणानि च ।
उदावर्ते विबन्धेषु यञ्ज्यादास्थापने सदा ॥ ११ ॥
अत एवौषधगणात्संकल्प्यमनुवासनम् ।
मारुतघ्नमिति प्रोक्तः संग्रहः पाञ्चकर्मिकः ॥ १२ ॥
तान्युपस्थितदोषाणां स्नेहस्वेदोपपादनैः ।
पञ्च कर्माणि कुर्वीत मात्राकालौ विचारयन् ॥ १३ ॥
मात्राकालाश्रया युक्तिः सिद्धिर्युक्तौ प्रतिष्ठिता ।
तिष्ठत्युपरि युक्तिज्ञो द्रव्यज्ञानवतां सदा ॥ १४ ॥
अत ऊर्ध्वं प्रवक्ष्यामि यवागूर्विविधौषधाः ।
विविधानां विकाराणां तत्साध्यानां निवृत्तये ॥ १५ ॥
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
यवागूर्दीपनीया स्याच्छूलघ्नी चोपसादिता ॥ १६ ॥
दधित्थबिल्वचाङ्गेरीतक्रदाडिमसाधिता ।
पाचनी ग्राहणी पेया सवाते पाञ्चमूलिका ॥ १७ ॥
शालिपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता ।
दाडिमाम्ला हिता पेया पित्तश्लेष्मातिसारिणाम् ॥ १८ ॥
पयस्यर्धोदके छागे ह्रीबेरोत्पलनागरैः ।
पेया रक्तातिसारघ्नी पृश्निपर्ण्या च साधिता ॥ १९ ॥
दद्यात्सातिविषां पेयां सामे साम्लां सनागराम् ।
श्वदंष्ट्राकण्टकारिभ्यां मूत्रकृच्छ्रे सफाणिताम् ॥ २० ॥
विडङ्गपिप्पलीमूलशिग्रुभिर्मरिचेन च ।
तक्रसिद्धा यवागूः स्यात्क्रिमिघ्नी ससुवर्चिका ॥ २१ ॥
मृद्वीकाशारिवालाजापिप्पलीमधुनागरैः ।
पिपासाघ्नी विषघ्नी च सोमराजी विपाचिता ॥ २२ ॥
सिद्धा वराहनिर्यूहे यवागूर्बृंहणी मता ।

  

गवेधुकानां भृष्टानां कर्पणीया समाक्षिका ॥ २३ ॥
सर्पिष्मती बहुतिला स्नेहनी लवणान्विता ।
कुशामलकनिर्यूहे श्यामाकानां विरूक्षणी ॥ २४ ॥
दशमूलीशृता कासहिक्काश्वासकफापहा ।
यमके मदिरा सिद्धा पक्वाशयरुजापहा ॥ २५ ॥
शाकैर्मांसैस्तिलैर्माषैः सिद्धा वर्चो निरस्यति ।
जम्ब्वाम्रास्थिदधित्थाम्लबिल्वैः सांग्राहिकी मता ॥ २६ ॥
क्षारचित्रकहिङ्ग्वम्लवेतसैर्भेदिनी मता ।
अभयापिप्पलीमूलविश्वैर्वातानुलोमनी ॥ २७ ॥
तक्रसिद्धा यवागूः स्याद्घृतव्यापत्तिनाशिनी ।
तैलव्यापदि शस्ता तु तक्रपिण्याकसाधिता ॥ २८ ॥
गव्यमांसरसैः साम्ला विषमज्वरनाशिनी ।
कण्ठ्या यवानां यमके पिप्पल्यामलकैः शृता ॥ २९ ॥
ताम्रचूडरसे सिद्धा रेतोमार्गरुजापहा ।
समाषविदला वृष्या घृतक्षीरोपसाधिता ॥ ३० ॥
उपोदिकादधिभ्यां तु सिद्धा मदविनाशिनी ।
क्षुधं हन्यादपामार्गक्षीरगोधारसे शृता ॥ ३१ ॥"

तत्र श्लोकाः ।

अष्टाविंशतिरित्येता यवाग्वः परिकीर्तिताः ।
पञ्चकर्माणि चाश्रित्य प्रोक्तो भैषज्यसंग्रहः ॥ ३२ ॥
पूर्वं मूलफलज्ञानहेतोरुक्तं यदौषधम् ।
पञ्चकर्माश्रयज्ञानहेतोस्तत्कीर्तितं पुनः ॥ ३३ ॥
स्मृतिमान्युक्तिहेतुज्ञो जितात्मा प्रतिपत्तिमान् ।
भिषगौषधसंयोगैश्चिकित्सां कर्तुमर्हति ॥ ३४ ॥

इति भेषजचतुष्केऽपामार्गतण्डुलीयो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

# तृतीयोऽध्यायः ।

## अथात आरग्वधीयमध्यायं वक्ष्याम इति ह स्माह भगवानात्रेयः ।

आरग्वधः सैडगजः करञ्जो वासा गुडूची मदनं हरिद्रे ।
श्र्याह्वः सुराह्वः खदिरो धवश्च निम्बो विडङ्गं करवीरकत्वक् ॥ १ ॥
ग्रन्थिश्च भौर्जो लशुनः शिरीषः सलोमशो गुग्गुलुकृष्णगन्धे ।
फणिज्जको वत्सकसप्तपर्णौ पीलूनि कुष्ठं सुमनःप्रवालाः ॥ २ ॥
वचा हरेणुस्त्रिवृता निकुम्भो भल्लातकं गैरिकमञ्जनं च ।
मनःशिलाले गृहधूम एला काशीसमुस्तार्जुनरोध्रसर्जाः ॥ ३ ॥
इत्यर्धरूपैर्विहिताः षडेते गोपित्तपीताः पुनरेव पिष्टाः ।
सिद्धाः परं सर्षपतैलयुक्ताश्चूर्णप्रदेहा भिषजा प्रयोज्याः ॥ ४ ॥
कुष्ठानि कृच्छ्राणि नवं किलासं सुरेन्द्रलुप्तं किटिभं सदद्रु ।
भगन्दरार्शांस्यपचीं सपामां हन्युः प्रयुक्तास्त्वचिरान्नराणाम् ॥ ५ ॥
कुष्ठं हरिद्रे सुरसं पटोलं निम्बाश्वगन्धे सुरदारु शिग्रु ।
ससर्षपं तुम्बुरुधान्यवन्यं चण्डां च चूर्णानि समानि कुर्यात् ॥ ६ ॥
तैस्तक्रयुक्तैः प्रथमं शरीरं तैलाक्तमुद्वर्तयितुं यतेत ।
तेनास्य कण्डूः पिडकाः सकोठाः कुष्ठानि शोफाश्च शमं व्रजन्ति ॥७॥
कुष्ठामृतासङ्गकटङ्कटेरी काशीसकाम्पिल्लकरोध्रमुस्ताः ।
सौगन्धिकं सर्जरसो विडङ्गं मनःशिलाले करवीरकत्वक् ॥ ८ ॥
तैलाक्तगात्रस्य कृतानि चूर्णान्येतानि दद्यादवचूर्णनार्थम् ।
दद्रुः सकण्डूः किटिभानि पामा विचर्चिका चैव तथैति शान्तिम् ॥९॥
मनःशिलाले मरिचानि तैलमार्कं पयः कुष्ठहरः प्रदेहः ।
तुल्यं विडङ्गं मरिचानि कुष्ठं लोध्रं च तद्वत्समनःशिलं स्यात् ॥१०॥
रसाञ्जनं सप्रपु( न्ना )नाडबीजं युक्तः कपित्थस्य रसेन लेपः ।
करञ्जबीजैडगजं सकुष्ठं गोमूत्रपिष्टं च परः प्रदेहः ॥ ११ ॥
उभे हरिद्रे कुटजस्य बीजं करञ्जबीजं सुमनःप्रवालान् ।
त्वचं समध्यां हयमारकस्य लेपं तिलक्षारयुतं विदध्यात् ॥ १२ ॥
मनःशिला त्वक्कुटजात्सकुष्ठः सलोमशः सैडगजः करञ्जः ।

ग्रन्थिश्च भौर्जः करवीरमूलं चूर्णानि साध्यानि तुषोदकेन ॥ १३ ॥
पलाशनिर्दाहरसेन चापि कर्षोद्धृतान्याढकसंमितेन ।
दर्वीप्रलेपं प्रवदन्ति लेपमेतत्परं कुष्ठनिसूदनाय ॥ १४ ॥
पर्णानि पिष्ट्वा चतुरङ्गुलस्य तक्रेण पर्णान्यथ काकमाच्याः ।
तैलाक्तगात्रस्य नरस्य कुष्ठान्युद्वर्तयेदश्वहनच्छदैश्च ॥ १५ ॥
कोलं कुलत्थाः सुरदारुरास्ना माषातसीतैलफलानि कुष्ठम् ।
वचा शताह्वा यवचूर्णमम्लमुष्णानि वातामयिनां प्रदेहः ॥ १६ ॥
आनूपमत्स्यामिषवेसवारैरुष्णैः प्रदेहः पवनापहः स्यात् ।
स्नेहैश्चतुर्भिर्दशमूलमिश्रैर्गन्धौषधैर्वानिलजित्प्रदेहः ॥ १७ ॥
तक्रेण युक्तं यवचूर्णमुष्णं सक्षारमार्तिं जठरे निहन्यात् ।
कुष्ठं शताह्वां सवचां यवानां चूर्णं सतैलाम्लमुशन्ति वाते ॥ १८ ॥
उभे शताह्वे मधुकं मधूकं बलां पियालं च कशेरुकं च ।
घृतं विदारीं च सितोपलां च कुर्यात्प्रदेहं पवने सरक्ते ॥ १९ ॥
रास्नां गुडूचीं मधुकं बले द्वे सजीवकं सर्षभकं पयश्च ।
घृतं च सिद्धं मधुशेषयुक्तं रक्तानिलार्तिं प्रणुदेत्प्रदेहः ॥ २० ॥
वाते सरक्ते सघृतः प्रदेहो गोधूमचूर्णं छगलीपयश्च ।
नतोत्पलं चन्दनकुष्ठयुक्तं शिरोरुजायां सघृतः प्रदेहः ॥ २१ ॥
प्रपौण्डरीकं सुरदारु कुष्ठं यष्ट्याह्वमेला कमलोत्पले च ।
शिरोरुजायां सघृतः प्रदेहो लोहैरका पद्मकचोरकैश्च ॥ २२ ॥
रास्ना हरिद्रे नलदं शताह्वे द्वे देवदारूणि सितोपलां च ।
जीवन्तिमूलं सघृतं सतैलमालेपनं पार्श्वरुजासु कोष्णम् ॥ २३ ॥
शैवालपद्मोत्पलवेत्रतुङ्गं प्रपौण्डरीकाणि मृणाललोध्रम् ।
प्रियङ्गुकालीयकचन्दनानि निर्वापणः स्यात्सघृतः प्रदेहः ॥ २४ ॥
सिता लता वेतसपद्मकानि यष्ट्याह्वमैन्द्री नलिनानि दूर्वा ।
यवासमूलं कुशकाशयोश्च निर्वापणः स्याज्जलमेरका च ॥ २५ ॥
शैलेयमेलागुरु चाथ कुष्ठं चण्डा नतं त्वक्सुरदारु रास्ना ।
शीतं निहन्यादचिरात्प्रदेहो विषं शिरीषस्तु ससिन्धुवारः ॥ २६ ॥
शिरीषलामज्जकहेमलोध्रैस्त्वग्दोषसंस्वेदहरः प्रघर्षः ।
पत्राम्बुलोध्राभयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदेहः ॥ २७ ॥

तत्र श्लोकः ।

इहात्रिजः सिद्धतमानुवाच द्वात्रिंशतं सिद्धमहर्षिपूज्यः ।
चूर्णप्रदेहान्विविधामयघ्नानारग्वधीये जगतो हितार्थम् ॥ २८ ॥

इति आरग्वधीयो नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

### अथातः षड्विरेचनशताश्रितीयमध्यायं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ।

"इह खलु षड्विरेचनशतानि भवन्ति । षड्विरेचनाश्रयाः । पञ्च कषायशतानि । पञ्च कषाययोनयः । पञ्चविधं कषायकल्पनम् । पञ्चाशन्महाकषाया इति संग्रहः ॥ १ ॥

षड्विरेचनशतानीति यदुक्तं तदिह संग्रहेणोदाहृत्य विस्तरेण कल्पोपनिषदि अनुव्याख्यास्यामः ॥ २ ॥

त्रयस्त्रिंशद्योगशतं प्रणीतं फलेष्वेकोनचत्वारिंशज्जीमूतकेषु योगाः ।
पञ्चचत्वारिंशदिक्ष्वाकुषु धामार्गवः षष्टिधा भवति योगयुक्तः ॥३॥
कुटजस्त्वष्टादशधा योगमेति कृतवेधनं षष्टिधा भवति योगयुक्तम् ।
श्यामात्रिवृद्योगशतं प्रणीतं दशापरे चात्र भवन्ति योगाः ॥ ४ ॥

चतुरङ्गुलो द्वादशधा योगमेति
लोध्रं विधौ षोडश योगयुक्तम् ।
महावृक्षो भवति विंशतियोगयुक्त
एकोनचत्वारिंशत्सप्तलाशङ्खिन्योर्योगाः ॥ ५ ॥

अष्टाचत्वारिंशद्दन्तीद्रवन्त्योरिति षड्विरेचनशतानि ॥ ६ ॥

षड्विरेचनाश्रया इति । क्षीरमूलत्वक्पत्रपुष्पफलानीति ॥ ७ ॥

पञ्च कषाययोनय इति । मधुरकषायोऽम्लकषायः कटुकषायस्तिक्तकषायः कषायकषायश्चेति तन्त्रे संज्ञा ॥ ८ ॥

पञ्चविधं कषायकल्पनमिति । तद्यथा । स्वरसः, कल्कः, शृतः, शीतः, फाण्टः, कषाय इति ॥ ९ ॥

"यन्त्रप्रपीडनाद्द्रव्याद्रसः स्वरस उच्यते ।
यत्पिण्डं रसपिष्टानां तत्कल्कं परिकीर्तितम् ॥ १० ॥
वह्नौ तु क्वथितं द्रव्यं शृतमाहुश्चिकित्सकाः ।
द्रव्यादापोत्थितात्तोये तत्पुनर्निशि संस्थितात् ॥ ११ ॥
कषायो योऽभिनिर्याति स शीतः समुदाहृतः ।
क्षिप्तोष्णतोये मृदितं तत्फाण्टं परिकीर्तितम् ॥ १२ ॥"

तेषां यथापूर्वं बलाधिक्यम् । अतः कषायकल्पना व्याध्यातुरबलापेक्षिणी । नत्वेवं खलु सर्वाणि सर्वत्रोपयोगीनि भवन्ति । पञ्चाशन्महाकषाया इति यदुक्तं तदनुव्याख्यास्यामः ॥ १३ ॥

तद्यथा । जीवनीयो बृंहणीयो लेखनीयो भेदनीयः संधानीयो दीपनीय इति षट्कः कषायवर्गः ॥ १४ ॥

बल्यो वर्ण्यः कण्ठ्यो हृद्य इति चतुष्कः कषायवर्गः ॥ १५ ॥

तृप्तिघ्नोऽर्शोघ्नः कुष्ठघ्नः कण्डूघ्नः कृमिघ्नो विषघ्न इति षट्कः कषायवर्गः ॥ १६ ॥

स्तन्यजननः स्तन्यशोधनः शुक्रजननः शुक्रशोधन इति चतुष्कः कषायवर्गः ॥ १७ ॥

स्नेहोपगः स्वेदोपगो वमनोपगो विरेचनोपग आस्थापनोपगोऽनुवासनोपगः शिरोविरेचनोपग इति सप्तकः कषायवर्गः ॥ १८ ॥

छर्दिनिग्रहणस्तृष्णानिग्रहणो हिक्कानिग्रहण इति त्रिकः कषायवर्गः ॥ १९ ॥

पुरीषसंग्रहणीयः पुरीषविरजनीयो मूत्रसंग्रहणीयो मूत्रविरजनीयो मूत्रविरेचनीय इति पञ्चकः कषायवर्गः ॥ २० ॥

कासहरः श्वासहरः शोथहरो ज्वरहरः श्रमहर इति पञ्चकः कषायवर्गः ॥ २१ ॥

दाहप्रशमनः शीतप्रशमन उदर्दप्रशमनोऽङ्गमर्दप्रशमनः शूलप्रशमन इति पञ्चकः कषायवर्गः ॥ २२ ॥

शोणितास्थापनो वेदनास्थापनः संज्ञास्थापनः प्रजास्थापनो वयःस्थापन इति पञ्चकः कषायवर्गः । इति पञ्चाशन्महाकषायाः ॥ २३ ॥

महतां च कषायाणां लक्षणोदाहरणार्थं व्याख्याता भवन्ति ।

तेषामेकैकस्मिन्महाकषाये दशदशावयविकान्कषायाननुव्याख्यास्यामः । तान्येव पञ्च कषायशतानि भवन्ति ॥ २४ ॥

तद्यथा । जीवकर्षभकौ मेदा महामेदा काकोली क्षीरकाकोली मुद्गमाषपर्ण्यौ जीवन्ती मधुकमिति दशेमानि जीवनीयानि भवन्ति ॥ २५ ॥

क्षीरिणी राजक्षवकं बला काकोली क्षीरकाकोली वाट्यायनी भद्रौदनी भारद्वाजी पयस्यर्ष्यगन्धा इति दशेमानि बृंहणीयानि भवन्ति ॥ २६ ॥

मुस्तकुष्ठहरिद्रादारुहरिद्रावचातिविषाकटुरोहिणीचित्रकचिरबिल्वहैमवत्य इति दशेमानि लेखनीयानि भवन्ति ॥ २७ ॥

सुवहार्कोरुबूकाग्निमुखीचित्राचित्रकचिरबिल्वशङ्खिनीसकुलादनीस्वर्णक्षीरिण्य इति दशेमानि भेदनीयानि भवन्ति ॥ २८ ॥

मधुकमधुपर्णीपृश्निपर्ण्यम्बष्ठकीसमङ्गामोचरसधातकीलोध्रप्रियङ्गुकट्फलानीति दशेमानि संधानीयानि भवन्ति ॥ २९ ॥

पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेराम्लवेतसमरिचाजमोदाभल्लातकास्थिहिङ्गुनिर्यासा इति दशेमानि दीपनीयानि भवन्ति ॥ ३० ॥ इति षट्कः कषायवर्गः ॥

ऐन्द्र्यृषभ्यतिरसर्ष्यप्रोक्तापयस्याश्वगन्धास्थिरारोहिणीबलातिबला इति दशेमानि बल्यानि भवन्ति ॥ ३१ ॥

चन्दनतुङ्गपद्मकोशीरमधुकमञ्जिष्ठासारिवापयस्यासितालता इति दशेमानि वर्ण्यानि भवन्ति ॥ ३२ ॥

सारिवेक्षुमूलमधुकपिप्पलीद्राक्षाविदारीकैटर्यहंसपदीबृहतीकण्टकारिका इति दशेमानि कण्ठ्यानि भवन्ति ॥ ३३ ॥

आम्राम्रातकनिकुचकरमर्दवृक्षाम्लाम्लवेतसकुवलयबदरदाडिममातुलुङ्गानीति दशेमानि हृद्यानि भवन्ति । इति चतुष्कः कषायवर्गः ॥ ३४ ॥

नागरचित्रकचव्यविडङ्गमूर्वागुडूचीवचामुस्तपिप्पलीपटोलानीति दशेमानि तृप्तिघ्नानि भवन्ति ॥ ३५ ॥

कुटजबिल्वचित्रकनागरातिविषाभयाधन्वयासकदारुहरिद्रावचाचव्यानीति दशेमानि अर्शोघ्नानि भवन्ति ॥ ३६ ॥

खदिराभयामलकहरिद्रारुष्करसप्तपर्णारग्वधकरवीरविडङ्गजातिप्रवाला इति दशेमानि कुष्ठघ्नानि भवन्ति ॥ ३७ ॥

चन्दननलदकृतमालनक्तमालनिम्बकुटजसर्षपमधुकदारुहरिद्रामुस्तानीति दशेमानि कण्डूघ्नानि भवन्ति ॥ ३८ ॥

अक्षीवमरीचगण्डीरकेबुकविडङ्गनिर्गुण्डीकिणिहीश्वदंष्ट्रावृषपर्णिकाखुपर्णिका इति दशेमानि क्रिमिघ्नानि भवन्ति ॥ ३९ ॥

हरिद्रामञ्जिष्ठासुवहासूक्ष्मैलापालिन्दीचन्दनकतकशिरीषसिन्धुवारश्लेष्मातका इति दशेमानि विषघ्नानि भवन्ति ॥ ४० ॥ इति षट्कः कषायवर्गः ।

वीरणशालिषष्टिकेक्षुवालिकादर्भकुशकाशगुन्द्रेत्कटकत्तृणमूलानीति दशेमानि स्तन्यजननानि भवन्ति ॥ ४१ ॥

पाठामहौषधसुरदारुमुस्तमूर्वागुडूचीवत्सकफलकिराततिक्तकटुरोहिणीशारिवा इति दशेमानि स्तन्यशोधनानि भवन्ति ॥ ४२ ॥

जीवकर्षभककाकोलीक्षीरकाकोलीमुद्गपर्णीमाषपर्णीमेदावृक्षरुहाजटिलाकुलिङ्गा इति दशेमानि शुक्रजननानि भवन्ति ॥ ४३ ॥

कुष्ठैलवालुककट्फलसमुद्रफेनकदम्बनिर्यासेक्षुकाण्डेक्ष्विक्षुरकवसुकोशीराणीति दशेमानि शुक्रशोधनानि भवन्ति । इति चतुष्कः कषायवर्गः ॥ ४४ ॥

मृद्वीकामधुकमधुपर्णीमेदाविदारीकाकोलीक्षीरकाकोलीजीवकजीवन्तीशालपर्ण्य इति दशेमानि स्नेहोपयोगानि भवन्ति ॥ ४५ ॥

शोभाञ्जनकैरण्डार्कवृश्चीरपुनर्नवायवतिलकुलत्थमाषबदराणीति दशेमानि स्वेदोपगानि भवन्ति ॥ ४६ ॥

मधुमधुककोविदारकर्बुदारनीपविदुलबिम्बीशणपुष्पीसदापुष्पीप्रत्यक्पुष्प्य इति दशेमानि वमनोपगानि भवन्ति ॥ ४७ ॥

द्राक्षाकाश्मर्यपरूषकाभयामलकबिभीतककुवलबदरकर्कन्धूपीलूनीति दशेमानि विरेचनोपगानि भवन्ति ॥ ४८ ॥

त्रिवृद्बिल्वपिप्पलीकुष्ठसर्षपवचावत्सकफलशतपुष्पामधुकमदनफलानीति दशेमान्यास्थापनोपगानि भवन्ति ॥ ४९ ॥

रास्नासुरदारुबिल्वमदनशतपुष्पावृश्चीरपुनर्नवाश्वदंष्ट्राग्निमन्थश्योनाका इति दशेमान्यनुवासनोपगानि भवन्ति ॥ ५० ॥

ज्योतिष्मतीक्षवकमरीचपिप्पलीविडङ्गशिग्रुसर्षपापामार्गतण्डुलश्वेतामहाश्वेता इति दशेमानि शिरोविरेचनोपगानि भवन्ति ॥५१॥ इति सप्तकः कषायवर्गः ।

जम्ब्वाम्रपल्लवमातुलुङ्गाम्लबदरदाडिमयवयष्टिकोशीरमृल्लाजा इति दशेमानि छर्दिनिग्रहाणि भवन्ति ॥ ५२ ॥

नागरधन्वयासकमुस्तपर्पटकचन्दनकिराततिक्तकगुडूचीह्रीबेरधान्यकपटोलानीति दशेमानि तृष्णानिग्रहाणि भवन्ति ॥ ५३ ॥

शटीपुष्करमूलबदरबीजकण्टकारिकाबृहतीवृक्षरुहाभयापिप्पलीदुरालभाकुलीरशृङ्ग्य इति दशेमानि हिक्कानिग्रहाणि भवन्ति ॥५४॥ इति त्रिकः कषायवर्गः ।

प्रियङ्ग्वनन्ताम्रास्थिकट्वङ्गलोध्रमोचरससमङ्गाधातकीपुष्पपद्मापद्मकेशराणीति दशेमानि पुरीषसंग्रहणानि भवन्ति ॥ ५५ ॥

जम्बुशल्लकीत्वक्कच्छुरामधुकाशाल्मलीश्रीवेष्टकभृष्टमृत्पयस्योत्पलतिलकणा इति दशेमानि पुरीषविरजनीयानि भवन्ति ॥ ५६ ॥

जम्ब्वाम्रप्लक्षवटकपीतनोदुम्बराश्वत्थभल्लातकाश्मन्तकसोमवल्का इति दशेमानि मूत्रसंग्रहणानि भवन्ति ॥ ५७ ॥

वृक्षादनीश्वदंष्ट्रावसुकवशिरपाषाणभेददर्भकुशकाशगुन्द्रेत्कटमूलानीति दशेमानि मूत्रविरेचनीयानि भवन्ति ॥ ५८ ॥

पद्मोत्पलनलिनकुमुदसौगन्धिकपुण्डरीकशतपत्रमधुकप्रियङ्गुधातकीपुष्पाणीति दशेमानि मूत्रविरजनीयानि भवन्ति ॥ ५९ ॥ इति पञ्चकः कषायवर्गः ।

द्राक्षाभयामलकपिप्पलीदुरालभाशृङ्गीकण्टकारिकावृश्चीरपुनर्नवातामलक्य इति दशेमानि कासहराणि भवन्ति ॥ ६० ॥

शटीपुष्करमूलाम्लवेतसैलाहिङ्ग्वगुरुसुरसातामलकीजीवन्तीचण्डा इति दशेमानि श्वासहराणि भवन्ति ॥ ६१ ॥

पाटलाग्निमन्थबिल्वस्योनाककाश्मर्यकण्टकारिकाबृहतीशालपर्णीपृश्निपर्णीगोक्षुरका इति दशेमानि शोथहराणि भवन्ति ॥ ६२ ॥

शारिवाशर्करापाठामञ्जिष्ठाद्राक्षापीलुपरूषकाभयामलकबिभीतकानीति दशेमानि ज्वरहराणि भवन्ति ॥ ६३ ॥

द्राक्षाखर्जूरपियालबदरदाडिमफल्गुपरूषकेक्षुयवयष्टिका इति दशेमानि श्रमहराणि भवन्ति ॥ ६४ ॥ इति पञ्चकः कषायवर्गः ।

लाजाचन्दनकाश्मर्यफलमधुकशर्करानीलोत्पलोशीरशारिवागुडूचीह्रीबेराणीति दशेमानि दाहप्रशमनानि भवन्ति ॥ ६५ ॥

तगरागुरुधन्याकशृङ्गवेरभूतीकवचाकण्टकारिकाग्निमन्थस्योनाकपिप्पल्य इति दशेमानि शीतप्रशमनानि भवन्ति ॥ ६६ ॥

तिन्दुकपियालबदरखदिरकदरसप्तपर्णाश्वकर्णार्जुनासनारिमेदा इति दशेमान्युदर्दप्रशमनानि भवन्ति ॥ ६७ ॥

विदारीगन्धापृश्निपर्णीबृहतीकण्टकारिकैरण्डकाकोलीचन्दनोशीरैलामधुकानीति दशेमानि अङ्गमर्दप्रशमनानि भवन्ति ॥ ६८ ॥

पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरमरिचाजमोदाजगन्धाजाजीगण्डीराणीति दशेमानि शूलप्रशमनानि भवन्ति ॥ ६९ ॥ इति पञ्चकः कषायवर्गः ।

मधुमधुकरुधिरमोचरसमृत्कपाललोध्रगैरिकप्रियङ्गुशर्करालाजा इति दशेमानि शोणितास्थापनानि भवन्ति ॥ ७० ॥

शालकट्फलकदम्बपद्मकतुङ्गमोचरसशिरीषवञ्जुलैलवालुकाशोका इति दशेमानि वेदनास्थापनानि भवन्ति ॥ ७१ ॥

हिङ्गुकैटर्यारिमेदावचाचोरकवयःस्थागोलोमीजटिलापलङ्कषाशोकरोहिण्य इति दशेमानि संज्ञास्थापनानि भवन्ति ॥ ७२ ॥

ऐन्द्री ब्राह्मी शतवीर्या सहस्रवीर्यामोघाव्यथाशिवारिष्टावाट्यपुष्पी विष्वक्सेनकान्ता इति दशेमानि प्रजास्थापनानि भवन्ति॥७३॥

अमृताभयाधात्रीमुक्ताश्वेताजीवन्त्यतिरसामण्डूकपर्णीस्थिरा पुनर्नवा इति दशेमानि वयःस्थापनानि भवन्ति ॥ ७४ ॥ इति पञ्चकः कषायवर्गः ।

इति पञ्चकषायशतान्यभिसमस्य पञ्चाशन्महाकषायाः महतां च कषायाणां लक्षणोदाहरणार्थं व्याख्याता भवन्ति ॥ ७५ ॥

न हि विस्तरस्य प्रमाणमस्ति न चाप्यतिसंक्षेपोऽल्पबुद्धीनां सामर्थ्यायोपकल्प्यते । तस्मादनतिसंक्षेपेणानतिविस्तरेण चोद्दिष्टाः । एतावन्तो ह्यल्पबुद्धीनां व्यवहाराय बुद्धिमतां च स्वालक्षण्यानुमानयुक्तिकुशलानामनुक्तार्थज्ञानायेति ॥ ७६ ॥

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच नैतानि भगवन्पञ्चकषायशतानि पूर्यते । तानि तानि ह्येवाङ्गानि संप्लवन्ते तेषु तेषु महाकषायेष्विति ॥ ७७ ॥

तमुवाच भगवानात्रेयः । नैतदेवं बुद्धिमता द्रष्टव्यमग्निवेश । एकोऽपि ह्यनेकां संज्ञां लभते कार्यान्तराणि कुर्वन् । तद्यथा पुरुषो बहूनां कर्मणां करणे समर्थो भवति । स यद्यत्कर्म करोति तस्य तस्य कर्मणः कर्तृकरणकार्यसंप्रयुक्तं तत्तद्गौणं नामविशेषं प्राप्नोति । तद्वदौषधद्रव्यमपि द्रष्टव्यम् । यदि चैकमेव किंचिद्द्रव्यमासादयामस्तथा गुणयुक्तं यत्सर्वकर्मणां करणे समर्थं स्यात्कस्ततोऽन्यदिच्छेदुपधारयितुमुपदेष्टुं वा शिष्येभ्य इति ॥ ७८ ॥"

तत्र श्लोकाः ।

यतो यावन्ति यैर्द्रव्यैर्विरेचनशतानि षट् ।
उक्तानि संग्रहेणेह तथैवैषां षडाश्रयाः ॥ ७९ ॥
रसा लवणवर्ज्याश्च कषाया इति संज्ञिताः ।
तस्मात्पञ्चविधा योनिः कषायाणामुदाहृता ॥ ८० ॥
तथा कल्पनमप्येषामुक्तं पञ्चविधं पुनः ।
महतां च कषायाणां पञ्चाशत्परिकीर्तिताः ॥ ८१ ॥
पञ्च चापि कषायाणां शतान्युक्तानि भागशः ।
लक्षणार्थं प्रमाणं हि विस्तरस्य न विद्यते ॥ ८२ ॥
न चालमतिसंक्षेपः सामर्थ्यायोपकल्प्यते ।
अल्पबुद्धेरयं तस्मान्नातिसंक्षेपविस्तरः ॥ ८३ ॥
मन्दानां व्यवहाराय बुधानां बुद्धिवृद्धये ।
पञ्चाशत्को ह्ययं वर्गः कषायाणामुदाहृतः ॥ ८४ ॥

तेषां कर्मसु बाह्येषु योगमाभ्यन्तरेषु च ।
संयोगं च वियोगं च यो वेद स भिषग्वरः ॥ ८५ ॥

इति भेषजचतुष्कषड्विरेचनशताश्रितीयो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

# अथ पञ्चमोऽध्यायः ।

## अथातो मात्राशितीयमध्यायं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः । "मात्राशी स्यात् । आहारमात्रा पुनरग्निबलापेक्षिणी । यावद्ध्यस्याशनमशितमनुपहत्य प्रकृतिं यथाकालं जरां गच्छति तावदस्य मात्राप्रमाणं वेदितव्यं भवति । तत्र शालिषष्टिकमुद्गलावकपिञ्जलैणशशशरभशम्बरादीन्याहारद्रव्याणि प्रकृतिलघून्यपि मात्रापेक्षीणि भवन्ति । तथा पिष्टेक्षुक्षीरविकृतिमाषानूपौदकपिशितादीन्याहारद्रव्याणि प्रकृतिगुरूण्यपि मात्रामेवापेक्षन्ते । न चैवमुक्ते द्रव्ये गुरुलाघवमकारणं मन्येत । लघूनि हि द्रव्याणि वाय्वग्निगुणबहुलानि भवन्ति । पृथिवीसोमगुणबहुलानीतराणि । तस्मात्स्वगुणादपि लघून्यग्निसंधुक्षणस्वभावानि अल्पदोषाणि चोच्यन्ते अपि सौहित्योपयुक्तानि । गुरूणि पुनर्नाग्निसंधुक्षणस्वभावान्यसामान्यादतश्चातिमात्रं दोषवन्ति सौहित्योपयुक्तानि अन्यत्र व्यायामाग्निबलात् । सैषा भवत्यग्निबलापेक्षिणी मात्रा न च नापेक्षते द्रव्यम् । द्रव्यापेक्षया च त्रिभागसौहित्यमर्धसौहित्यं वा गुरूणामुपदिश्यते । लघूनामपि च नातिसौहित्यमग्नेर्युक्त्यर्थम् । मात्रावद्ध्यशनमशितमनुपहत्य प्रकृतिं बलवर्णसुखायुषा योजयत्युपयोक्तारमवश्यमिति ॥ १ ॥ भवन्ति चात्र—

गुरुपिष्टमयं तस्मात्तण्डुलान्पृथुकानपि ।
न जातु भुक्तवान्खादेन्मात्रां खादेद्बुभुक्षितः ॥ २ ॥
वल्लूरं शुष्कशाकानि शालूकानि बिसानि च ।
नाभ्यसेद्गौरवान्मांसं कृशं नैवोपयोजयेत् ॥ ३ ॥
कूर्चिकांश्च किलाटांश्च शौकरं गव्यमामिषम् ।
मत्स्यान्दधि च माषांश्च यवकांश्च न शीलयेत् ॥ ४ ॥
षष्टिकान्शालिमुद्गांश्च सैन्धवामलके यवान् ।

आन्तरीक्षं पयः सर्पिर्जाङ्गलं मधु चाभ्यसेत् ॥ ५ ॥
तच्च नित्यं प्रयुञ्जीत स्वास्थ्यं येनानुवर्तते ।
अजातानां विकाराणामनुत्पत्तिकरं च यत् ॥ ६ ॥
अत ऊर्ध्वं शरीरस्य कार्यमभ्यञ्जनादिकम् ।
स्वस्थवृत्तमभिप्रेत्य गुणतः संप्रवक्ष्यते ॥ ७ ॥
सौवीरमञ्जनं नित्यं हितमक्ष्णोः प्रयोजयेत् ।
पञ्चरात्रेऽष्टरात्रे वा स्रावणार्थे रसाञ्जनम् ॥ ८ ॥
चक्षुस्तेजोमयं तस्य विशेषाच्छ्लेष्मतो भयम् ।
दिवा तन्न प्रयोक्तव्यं नेत्रयोस्तीक्ष्णमञ्जनम् ॥ ९ ॥
विरेकदुर्बला दृष्टिरादित्यं प्राप्य सीदति ।
तस्मात्स्राव्यं निशायां तु ध्रुवमञ्जनमिष्यते ॥ १० ॥
ततः श्लेष्महरं कर्म हितं दृष्टेः प्रसादनम् ॥ ११ ॥
यथा हि कनकादीनां मणीनां विविधात्मनाम् ।
धौतानां निर्मला शुद्धिस्तैलचैलकचादिभिः ॥ १२ ॥
एवं नेत्रेषु मर्त्यानामञ्जनाश्च्योतनादिभिः ।
दृष्टिर्निराकुला भाति निर्मले नभसीन्दुवत् ॥ १३ ॥
हरेणुकां प्रियङ्गुं च पृथ्वीकां केशरं नखम् ।
ह्रीबेरं चन्दनं पत्रं त्वगेलोशीरपद्मकम् ॥ १४ ॥
ध्यामकं मधुकं मांसीं गुग्गुल्वगुरुशर्करम् ।
न्यग्रोधोदुम्बराश्वत्थप्लक्षलोध्रत्वचः शुभाः ॥ १५ ॥
वन्यं सर्जरसं मुस्तं शैलेयं कमलोत्पले ।
श्रीवेष्टकं शल्लकीं च शुकबर्हमथापि च ॥ १६ ॥
पिष्ट्वा लिम्पेच्छरेषीकां तां वर्तिं यवसन्निभाम् ।
अङ्गुष्ठसंमितां कुर्यादष्टाङ्गुलसमां भिषक् ॥ १७ ॥
शुष्कां विगर्भां तां वर्तिं धूमनेत्रार्पितां नरः ।
स्नेहाक्तामग्निसंप्लुष्टां पिबेत्प्रायोगिकीं सुखाम् ॥ १८ ॥
वसाघृतमधूच्छिष्टैर्युक्तियुक्तैर्वरौषधैः ।
वर्तिं मधुरकैः कृत्वा स्नैहिकीं धूममाचरेत् ॥ १९ ॥
श्वेता ज्योतिष्मती चैवं हरितालं मनःशिला ।

गन्धाश्चागुरुपत्राद्या धूममूर्धविरेचनम् ॥ २० ॥
गौरवं शिरसः शूलं पीनसार्धावभेदकौ ।
कर्णाक्षिशूलं कासश्च हिक्काश्वासौ गलग्रहः ॥ २१ ॥
दन्तदौर्बल्यमास्रावः स्रोतोघ्राणाक्षिदोषजः ।
पूतिघ्राणास्यगन्धश्च दन्तशूलमरोचकः ॥ २२ ॥
हनुमन्याग्रहः कण्डूः क्रिमयः पाण्डुता मुखे ।
श्लेष्मप्रसेको वैस्वर्यं गलशुण्ड्युपजिह्विका ॥ २३ ॥
खालित्यं पिञ्जरत्वं च केशानां पतनं तथा ।
क्षवथुश्चातितन्द्रा च बुद्धेर्मोहोऽतिनिद्रता ॥ २४ ॥
धूमपानात्प्रशाम्यन्ति बलं भवति चाधिकम् ।
शिरोरुहकपालानामिन्द्रियाणां स्वरस्य च ॥ २५ ॥
न च वातकफात्मानो बलिनोऽप्यूर्ध्वजत्रुजाः ।
धूमवक्त्रकपानस्य व्याधयः स्युः शिरोगताः ॥ २६ ॥
प्रयोगपाने तस्याष्टौ कालाः संपरिकीर्तिताः ।
वातश्लेष्मसमुत्क्लेशः कालेष्वेषु हि लक्ष्यते ॥ २७ ॥
स्नात्वा भुक्त्वा समुल्लिख्य क्षुत्त्वा दन्तान्विघृष्य च ।
नावनाञ्जननिद्रान्ते चात्मवान्धूमपो भवेत् ॥ २८ ॥
तथा वातकफात्मानो न भवन्त्यूर्ध्वजत्रुजाः ।
रोगास्तस्य तु पेयाः स्युरापानास्त्रिस्त्रयस्त्रयः ॥ २९ ॥
परं द्विकालपायी स्यादह्नः कालेषु बुद्धिमान् ।
प्रयोगे स्नैहिके त्वेकं विरेच्यं त्रिश्चतुः पिबेत् ॥ ३० ॥
हृत्कण्ठेन्द्रियसंशुद्धिर्लघुत्वं शिरसः शमः ।
यथेरितानां दोषाणां सम्यक् पीतस्य लक्षणम् ॥ ३१ ॥
बाधिर्यमान्ध्यं मूकत्वं रक्तपित्तं शिरोभ्रमम् ।
अकाले चातिपीतश्च धूमः कुर्यादुपद्रवान् ॥ ३२ ॥
तत्रेष्टं सर्पिषः पानं नावनाञ्जनतर्पणम् ।
स्नैहिकं धूमजे दोषे वायुः पित्तानुगो यदि ॥ ३३ ॥
शीतं तु रक्तपित्ते स्याच्छ्लेष्मपित्ते विरूक्षणम् ।
परं त्वतः प्रवक्ष्यामि धूमो येषां विगर्हितः ॥ ३४ ॥

न विरिक्तः पिबेद्धूमं न कृते बस्तिकर्मणि ।
न रक्ती न विषेणार्तो न शोची न च गर्भिणी ॥ ३५ ॥
न श्रमे न मदे नामे न पित्ते न प्रजागरे ।
न मूर्च्छाभ्रमतृष्णासु न क्षीणे नापि च क्षते ॥ ३६ ॥
न मद्यदुग्धे पीत्वा च न स्नेहं न च माक्षिकम् ।
धूमं न भुक्त्वा दध्ना च न रूक्षः क्रुद्ध एव च ॥ ३७ ॥
न तालुशोषे तिमिरे शिरस्यभिहते न च ।
न शङ्खके न रोहिण्यां न मेहे न मदात्यये ॥ ३८ ॥
एषु धूममकालेषु मोहात्पिबति यो नरः ।
रोगास्तस्य प्रवर्धन्ते दारुणा धूमविभ्रमात् ॥ ३९ ॥
धूमयोग्यः पिबेद्दोषे शिरोघ्राणाक्षिसंश्रये ।
घ्राणेनास्येन कण्ठस्थे मुखेन घ्राणपो वमेत् ॥ ४० ॥
आस्येन धूमकवलान्पिबन्घ्राणेन नोद्वमेत् ।
प्रतिलोमं गतो ह्याशु धूमो हिंस्याद्धि चक्षुषी ॥ ४१ ॥
ऋज्वङ्गचक्षुस्तच्चेताः सूपविष्टस्त्रिपर्ययम् ।
पिबेच्छिद्रं पिधायैकं नासया धूममात्मवान् ॥ ४२ ॥
चतुर्विंशतिकं नेत्रं स्वङ्गुलीभिर्विरेचने ।
द्वात्रिंशदङ्गुलं स्नेहे प्रयोगे चार्धमिष्यते ॥ ४३ ॥
ऋजुत्रिकोषाफलितं कोलास्थ्यग्रप्रमाणितम् ।
बस्तिनेत्रसमं द्रव्यं धूमनेत्रं प्रशस्यते ॥ ४४ ॥
दूराद्विनिर्गतः पर्वच्छिन्नो नाडीतनूकृतः ।
नेन्द्रियं बाधते धूमो मात्राकालनिषेवितः ॥ ४५ ॥
यदा चोरश्च कण्ठश्च शिरश्च लघुतां व्रजेत् ।
कफश्च तनुतां प्राप्तः सुपीतं धूममादिशेत् ॥ ४६ ॥
अविशुद्धः स्वरो यस्य कण्ठश्च सकफो भवेत् ।
स्तिमितो मस्तकश्चैव न पीतं धूममादिशेत् ॥ ४७ ॥
तालु मूर्धा च कण्ठश्च शुष्यते परितप्यते ।
तृष्यते मुह्यते जन्तू रक्तं च स्रवतेऽधिकम् ॥ ४८ ॥
शिरश्च भ्रमतेऽत्यर्थं मूर्च्छा चास्योपजायते ।

इन्द्रियाण्युपतप्यन्ते धूमेऽत्यर्थं निषेविते ॥ ४९ ॥
वर्षेवर्षेऽणुतैलं च कालेषु त्रिषु नाचरेत् ।
प्रावृट्शरद्वसन्तेषु गतमेघे नभस्तले ॥ ५० ॥
नस्यकर्म यथाकालं यो यथोक्तं निषेवते ।
न तस्य चक्षुर्न घ्राणं न श्रोत्रमुपहन्यते ॥ ५१ ॥
न स्युः श्वेता न कपिलाः केशाः श्मश्रूणि वा पुनः ।
न च केशाः प्रलुप्यन्ते वर्धन्ते च विशेषतः ॥ ५२ ॥
मन्यास्तम्भः शिरःशूलमर्दितं हनुसंग्रहः ।
पीनसार्धावभेदौ च शिरःकम्पश्च शाम्यति ॥ ५३ ॥
शिरा शिरःकपालानां संधयः स्नायुकण्डराः ।
नावनप्रीणिताश्चास्य लभन्तेऽभ्यधिकं बलम् ॥ ५४ ॥
मुखं प्रसन्नोपचितं स्वरः स्निग्धः स्थिरो महान् ।
सर्वेन्द्रियाणां वैमल्यं बलं भवति चाधिकम् ॥ ५५ ॥
न चास्य रोगाः सहसा प्रभवन्त्यूर्ध्वजत्रुजाः ।
जीर्यतश्चोत्तमाङ्गे च जरा न लभते बलम् ॥ ५६ ॥
चन्दनागुरुणी पत्रं दार्वीत्वङ्मधुकं बलाम् ।
प्रपौण्डरीकं सूक्ष्मैलां विडङ्गं बिल्वमुत्पलम् ॥ ५७ ॥
ह्रीबेरमभयं वन्यं त्वङ्मुस्तं शारिवां स्थिराम् ।
सुराह्वं पृश्निपर्णीं च जीवन्तीं च शतावरीम् ॥ ५८ ॥
हरेणुं बृहतीं व्याघ्रीं सुरभीं पद्मकेशरम् ।
विपाचयेच्छतगुणे माहेन्द्रे विमलेऽम्भसि ॥ ५९ ॥
तैलाद्दशगुणं शेषं कषायमवतारयेत् ।
तेन तैलं कषायेण दशकृत्वो विपाचयेत् ॥ ६० ॥
अथास्य दशमे पाके समांशं छागलं पयः ।
दद्यादेषोऽणुतैलस्य नावनीयस्य संविधिः ॥ ६१ ॥
तस्य मात्रां प्रयुञ्जीत तैलस्यार्धपलोन्मिताम् ।
स्निग्धस्विन्नोत्तमाङ्गस्य पिचुना नावनैस्त्रिभिः ॥ ६२ ॥
त्र्यहात्त्र्यहाच्च सप्ताहमेतत्कर्म समाचरेत् ।
निवातोष्णसमाचारो हिताशी नियतेन्द्रियः ॥ ६३ ॥

तैलमेतत्रिदोषघ्नमिन्द्रियाणां बलप्रदम् ।
प्रयुञ्जानो यथाकालं यथोक्तानश्नुते गुणान् ॥ ६४ ॥
आपोत्थिताग्रं द्वौ कालौ कषायं कटुतिक्तकम् ।
भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन् ॥ ६५ ॥
निहन्ति गन्धवैरस्यं जिह्वादन्तास्यजं मलम् ।
निष्कृष्य रुचिमाधत्ते सद्यो दन्तविशोधनम् ॥ ६६ ॥
सुवर्णरूप्यताम्राणि त्रपुरीतिमयानि च ।
जिह्वानिर्लेखनानि स्युरतीक्ष्णान्यनृजूनि च ॥ ६७ ॥
जिह्वामूलगतं यच्च मलमुच्छ्वासरोधि च ।
सौगन्ध्यं भजते तेन तस्माज्जिह्वां विनिर्लिखेत् ॥ ६८ ॥
करञ्जकरवीरार्कमालतीककुभासनाः ।
शस्यन्ते दन्तपवने ये चाप्येवंविधा द्रुमाः ॥ ६९ ॥
धार्याण्यास्येन वैशद्यरुचिसौगन्ध्यमिच्छता ।
जातीकटुकपूगानां लवङ्गस्य फलानि च ॥ ७० ॥
कक्कोलकफलं पत्रं ताम्बूलस्य शुभं तथा ।
तथा कर्पूरनिर्यासः सूक्ष्मैलायाः फलानि च ॥ ७१ ॥
हन्वोर्बलं स्वरबलं वदनोपचयः परः ।
स्यात्परं च रसज्ञानमन्ने च रुचिरुत्तमा ॥ ७२ ॥
न चास्य कण्ठशोषः स्यान्नौष्ठयोः स्फुटनाद्भयम् ।
न च दन्ताः क्षयं यान्ति दृढमूला भवन्ति च ॥ ७३ ॥
न शूल्यन्ते न चाम्लेन हृष्यन्ते भक्षयन्ति च ।
परानपि खरान्भक्ष्यान्तैलगण्डूषसेवनात् ॥ ७४ ॥
नित्यं स्नेहार्द्रशिरसः शिरःशूलं न जायते ।
न खालित्यं न पालित्यं न केशाः प्रपतन्ति च ॥ ७५ ॥
बलं शिरःकपालानां विशेषेणाभिवर्धते ।
दृढमूलाश्च दीर्घाश्च कृष्णाः केशा भवन्ति च ॥ ७६ ॥
इन्द्रियाणि प्रसीदन्ति सुत्वग्भवति चामलम् ।
निद्रालाभः सुखं च स्यान्मूर्ध्नि तैलनिषेवणात् ॥ ७७ ॥
न कर्णरोगा वातोत्था न मन्याहनुसंग्रहः ।

नोच्चैःश्रुतिर्न बाधिर्यं स्यान्नित्यं कर्णतर्पणात् ॥ ७८ ॥
स्नेहाभ्यङ्गाद्यथा कुम्भश्चर्म स्नेहविमर्दनात् ।
भवत्युपाङ्गादक्षश्च दृढः क्लेशसहो यथा ।
तथा शरीरमभ्यङ्गाद्दृढं सुत्वक्प्रजायते ॥ ७९ ॥
प्रशान्तमारुताबाधं क्लेशव्यायामसंसहम् ।
स्पर्शने चाधिको वायुः स्पर्शनं च त्वगाश्रितम् ।
त्वच्यश्च परमोऽभ्यङ्गस्तस्मात्तं शीलयेन्नरः ॥ ८० ॥
न चाभिघाताभिहतं गात्रमभ्यङ्गसेविनः ।
विकारं भजतेऽत्यर्थं बलकर्मणि वा क्वचित् ॥ ८१ ॥
सुस्पर्शोपचिताङ्गश्च बलवान्प्रियदर्शनः ।
भवत्यभ्यङ्गनित्यत्वान्नरोऽल्पजर एव च ॥ ८२ ॥
खरत्वं शुष्कतां रौक्ष्यं श्रमः सुप्तिश्च पादयोः ।
सद्य एवोपशाम्यन्ति पादाभ्यङ्गनिषेवणात् ॥ ८३ ॥
जायते सौकुमार्यं च बलं स्थैर्यं च पादयोः ।
दृष्टिः प्रसादं लभते मारुतश्चोपशाम्यति ॥ ८४ ॥
न च स्याद्गृध्रसीवाताः पादयोः स्फुटनं न च ।
न शिरास्नायुसंकोचः पादाभ्यङ्गेन पादयोः ॥ ८५ ॥
दौर्गन्ध्यं गौरवं तन्द्रां कण्डूमलमरोचकम् ।
स्वेदं बीभत्सतां हन्ति शरीरपरिमार्जनम् ॥ ८६ ॥
पवित्रं वृष्यमायुष्यं श्रमस्वेदमलापहम् ।
शरीरबलसंधानं स्नानमोजस्करं परम् ॥ ८७ ॥
काम्यं यशस्यमायुष्यमलक्ष्मीघ्नं प्रहर्षणम् ।
श्रीमत्पारिषदं शस्तं निर्मलाम्बरधारणम् ॥ ८८ ॥
वृष्यं सौगन्ध्यमायुष्यं काम्यं पुष्टिबलप्रदम् ।
सौमनस्यमलक्ष्मीघ्नं गन्धमाल्यनिषेवणम् ॥ ८९ ॥
धन्यं मङ्गल्यमायुष्यं श्रीमद्व्यसनसूदनम् ।
हर्षणं काम्यमोजस्यं रत्नाभरणधारणम् ॥ ९० ॥
मेध्यं पवित्रमायुष्यमलक्ष्मीकलिनाशनम् ।
पादयोर्मलमार्गाणां शौचाधानमभीक्ष्णशः ॥ ९१ ॥

शनं, कण्डूर्विनाशयति, व्रणानवसादयति, क्रिमीन्हिनस्ति, मांसं विलिखति, शोणितसंघातं भिनत्ति, बन्धांश्छिनत्ति, मार्गान्विवृणोति, श्लेष्माणं शमयति, लघुरुष्णो रूक्षश्च ॥ ६४ ॥

स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानो विपाकप्रभावात्पौंस्त्वमुपहन्ति, रसवीर्यप्रभावान्मोहयति ग्लापयति सादयति कर्षयति, मूर्च्छयति नमयति तमयति भ्रमयति कण्ठं परिदहति शरीरतापमुपजनयति बलं क्षिणोति तृष्णां जनयति वाय्वग्निबाहुल्याद्भ्रमदवथुकम्पतोदभेदैश्चरणभुजपार्श्वपृष्ठप्रभृतिषु मारुतजान्विकारानुपजनयति ॥ ६५ ॥

तिक्तो रसः स्वयमरोचिष्णुररोचकघ्नो विषघ्नः कृमिघ्नो मूर्च्छादाहकण्डूकुष्ठतृष्णाप्रशमनः त्वङ्मांसयोः स्थिरीकरणो ज्वरघ्नो दीपनः पाचनः स्तन्यशोधनो लेखनः क्लेदमेदोवसामज्जलसिकापूयस्वेदमूत्रपुरीषपित्तश्लेष्मोपशोषणो रूक्षः शीतो लघुश्च ॥ ६६ ॥

स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानो रौक्ष्यात्खरविशदस्वभावाच्च रसरुधिरमांसमेदोऽस्थिमज्जशुक्राण्युच्छोषयति स्रोतसां खरत्वमुपपादयति बलमादत्ते कर्षयति मोहयति वदनमुपशोषयति अपरांश्च वातविकारानुपजनयति ॥ ६७ ॥

कषायो रसः संशमनः संग्राही संधारणः पीडनो रोपणः शोषणः स्तम्भनः श्लेष्मरक्तपित्तप्रशमनः शरीरक्लेदस्योपयोक्ता, रूक्षः शीतो गुरुश्च ॥ ६८ ॥

स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमान आस्यं शोषयति, हृदयं पीडयति, उदरमाध्मापयति, वाचं निगृह्णाति, स्रोतांस्यवबध्नाति, श्यावत्वमापादयति, पौंस्त्वमुपहन्ति, विष्टभ्य जरां गच्छति, वातमूत्रपुरीषाण्यवगृह्णाति, कर्षयति, ग्लापयति, तर्षयति, स्तम्भयति, खरविशदरूक्षत्वात्पक्षवधग्रहापतानकार्दितप्रभृतींश्च वातविकारानुपजनयतीति ॥ ६९ ॥

एवमेते षड्रसाः पृथक्त्वेन वा मात्रशः सम्यगुपयुज्यमाना उपकारकरा अध्यात्मलोकस्यापकारकराः पुनरतोऽन्यथोपयुज्यमानांस्तान्विद्वानुपकारार्थमेव मात्रशः सम्यगुपयोजयेदिति ॥ ७० ॥

भवन्ति चात्र ।

शीतं वीर्येण यद्द्रव्यं मधुरं रसपाकयोः ।
तयोरम्लं यदुष्णं च यच्चोष्णं कटुकं तयोः ॥ ७१ ॥
तेषां रसोपदेशेन निर्देश्यो गुणसंग्रहः ।
वीर्यतो विपरीतानां पाकतश्चोपदेक्ष्यते ॥ ७२ ॥
यथा पयो यथा सर्पिर्यथा वा चव्यचित्रकौ ।
एवमादीनि चान्यानि निर्दिशेद्रसतो भिषक् ॥ ७३ ॥
मधुरं किंचिदुष्णं स्यात्कषायं तिक्तमेव च ।
यथा महत्पञ्चमूलं यथा चानूपमामिषम् ॥ ७४ ॥
लवणं सैन्धवं नोष्णमम्लमामलकं तथा ।
अर्कागुरुगुडूचीनां तिक्तानामुष्णमुच्यते ॥ ७५ ॥
किंचिदम्लं हि संग्राहि किंचिदम्लं भिनत्ति च ।
यथा कपित्थं संग्राहि भेदि चामलकं तथा ।
पिप्पली नागरं वृष्यं कटु चावृष्यमुच्यते ॥ ७६ ॥
कषायः स्तम्भनः शीतः सोऽभयात्वन्यथा मता ।
तस्माद्रसोपदेशेन न सर्वं द्रव्यमादिशेत् ॥ ७७ ॥
दृष्टं तुल्यरसेऽप्येवं द्रव्ये द्रव्ये गुणान्तरम् ।
रौक्ष्यात्कषायो रूक्षाणामुत्तमो मध्यमः कटुः ॥ ७८ ॥
तिक्तोऽवरस्तथोष्णानामुष्णत्वाल्लवणः परः ।
मध्योऽम्लः कटुकश्चान्त्यः स्निग्धानां मधुरः परः ।
मध्योऽम्लो लवणश्चान्त्यो रसः स्नेहान्निरुच्यते ॥ ७९ ॥
मध्यः कृष्टावराः शैत्यात्कषायस्वादुतिक्तकाः ।
तिक्तात्कषायो मधुरः शीताच्छीततरः परः ।
स्वादुर्गुरुत्वादधिकः कषायाल्लवणोऽवरः ॥ ८० ॥
अम्लात्कटुस्ततस्तिक्तो लघुत्वादुत्तमो मतः ।
केचिल्लघूनामवरमिच्छन्ति लवणं रसम् ॥ ८१ ॥
गौरवे लाघवे चैव सोऽवरस्तूभयोरपि ।
परंचातो विपाकानां लक्षणं संप्रवक्ष्यते ॥ ८२ ॥
कटुतिक्तकषायाणां विपाकः प्रायशः कटुः ।

  

अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा ॥ ८३ ॥
मधुरो लवणाम्लौ च स्निग्धभावास्त्रयो रसाः ।
वातमूत्रपुरीषाणां प्रायो मोक्षे सुखा मताः ॥ ८४ ॥
कटुतिक्तकषायास्तु रूक्षभावास्त्रयो रसाः ।
दुःखा विमोक्षे दृश्यन्ते वातविण्मूत्ररेतसाम् ॥ ८५ ॥
शुक्रहा बद्धविण्मूत्रो विपाको वातलः कटुः ।
मधुरः सृष्टविण्मूत्रो विपाके कफशुक्रलः ॥ ८६ ॥
पित्तकृत्सृष्टविण्मूत्रः पाकेऽम्लः शुक्रनाशनः ।
तेषां गुरुः स्यान्मधुरः कटुकाम्लावतोऽन्यथा ॥ ८७ ॥
विपाकलक्षणस्याल्पमध्यभूयस्त्वमेव च ।
द्रव्याणां गुणवैशेष्यात्तत्र तत्रोपलक्षयेत् ॥ ८८ ॥
तीक्ष्णं रूक्षं मृदु स्निग्धं लघूष्णं गुरु शीतलम् ।
वीर्यमष्टविधं केचित्केचिद्द्विविधमास्थिताः ८९ ॥
शीतोष्णमिति वीर्यं तु क्रियते येन या क्रिया ।
नावीर्यं कुरुते किंचित्सर्वा वीर्यकृता क्रिया ॥ ९० ॥
रसो निपाते द्रव्याणां विपाकः कर्मनिष्ठया ।
वीर्यं यावदधीवासान्निपाताच्चोपलभ्यते ॥ ९१ ॥
रसवीर्यविपाकानां सामान्यं यस्य लक्ष्यते ।
विशेषः कर्मणां चैव प्रभावस्तस्य च स्मृतः ॥ ९२ ॥
कटुकः कटुकः पाके वीर्योष्णश्चित्रको मतः ।
तद्वद्दन्ती प्रभावात्तु विरेचयति मानवम् ॥ ९३ ॥
विषं विषघ्नमुक्तं यत्प्रभावस्तत्र कारणम् ।
ऊर्ध्वानुलोमनं यच्च तत्प्रभावप्रभावितम् ॥ ९४ ॥
मणीनां धारणीयानां कर्म यद्विविधात्मकम् ।
तत्प्रभावकृतं तेषां प्रभावोऽचिन्त्य इष्यते ॥ ९५ ॥
किंचिद्रसेन कुरुते कर्म वीर्येण चापरम् ।
द्रव्यं गुणेन पाकेन प्रभावेण च किंचन ॥ ९६ ॥
रसं विपाकस्तौ वीर्यं प्रभावस्तानपोहति ।
गुणसाम्ये रसादीनामिति नैसर्गिकं बलम् ॥ ९७ ॥

सम्यग्विपाकवीर्याणि प्रभावश्चाप्युदाहृतः ॥ ९८ ॥
षण्णां रसानां विज्ञानमुपदेक्ष्याम्यतः परम् ।
स्नेहनप्रीणनाह्लादमार्दवैरुपलभ्यते ॥ ९९ ॥
मुखस्थो मधुरश्चास्यं व्याप्नुवंल्लिम्पतीव च ।
दन्तहर्षान्मुखस्रावात्स्वेदनान्मुखबोधनात् ।
विदाहाच्चास्यकण्ठस्य प्राश्यैवाम्लं रसं वदेत् ॥ १०० ॥
प्रलीयन्क्लेदविष्यन्दलाघवं कुरुते मुखे ।
यः शीघ्रं लवणो ज्ञेयः स विदाहान्मुखस्य च ॥ १०१ ॥
संवेजयेद्यो रसनां निपाते तुदतीव च ।
विदहन्मुखनासाक्षि संस्रावी स कटुः स्मृतः ॥ १०२ ॥
प्रतिहन्ति निपाते यो रसनं स्वदते न च ।
स तिक्तो मुखवैशद्यशोषप्रह्लादकारकः॥ १०३ ॥
वैशद्यस्तम्भजाऽड्यैर्यो रसनं योजयेद्रसः ।
बध्नातीव च यः कण्ठं कषायः स विकास्यपि ॥१०४॥ इति ॥

एवं वादिनं भगवन्तमात्रेयमग्निवेश उवाच । भगवन्, श्रुतमेतदवितथमर्थसंपद्युक्तं भगवतो यथावद्द्रव्यकर्माधिकारे वचः परं त्वाहारविकाराणां वैरोधिकानां लक्षणमनतिसंक्षेपेणोपदिश्यमानं शुश्रूषामह इति ॥ १०५ ॥

तमुवाच भगवानात्रेयः । देहधातुप्रत्यनीकभूतानि द्रव्याणि देहधातुविरोधमापाद्यन्ते परस्परविरुद्धानि कानिचित्संयोगात्संस्कारादपराणि देशकालमात्रादिभिश्चापराणि तथा स्वभावादपराणि ॥ १०६ ॥

तत्र यान्याहारमधिकृत्य भूयिष्ठमुपयुज्यन्ते तेषामेकदेशं वैरोधिकमधिकृत्योपदेक्ष्यामः ॥ १०७ ॥

न मत्स्यान्पयसा सहाभ्यवहरेत् उभयं ह्येतन्मधुरं मधुरविपाकान्महाभिष्यन्दि शीतोष्णत्वाद्विरुद्धवीर्यं विरुद्धवीर्यत्वाच्छोणितप्रदूषणाय महाभिष्यन्दित्वान्मार्गोपरोधाय च ॥ १०८ ॥

तदनन्तरमात्रेयवचनमनुनिशम्य भद्रकाप्योऽग्निवेशमुवाच । सर्वानेव मत्स्यान्पयसा सहाभ्यवहरेत् अन्यत्रैकस्माच्चिलिचिमात् ।

स पुनः शकली सर्वतो लोहितराजिः रोहितप्रकारः प्रायो भूमौ चरति तं चेत्पयसा सहाभ्यवहरेन्निःसंशयं शोणितजानां विबन्धजानां वा व्याधीनामन्यतमं अथवा मरणं प्राप्नुयादिति ॥ १०९ ॥

नेति भगवानात्रेयः । सर्वानेव मत्स्यान्न पयसाभ्यवहरेद्विशेषतस्तु चिलिचिमं स हि महाभिष्यन्दितमत्वात्स्थूललक्षणतरानेतान्व्याधीनुपजनयत्यामविषमुदीरयति च ॥ ११० ॥

ग्राम्यानूपौदकपिशितानि मधुतिलगुडपयोमाषमूलकबिसैर्विरूढधान्यैश्च नैकधा अद्यात् । तन्मूलं च बाधिर्यान्ध्यवेपथुजाड्यविकलमूकतामैन्मिण्यमथवा मरणमाप्नोति ॥ १११ ॥

न पौष्करं रोहिणीकं वा शाकं न कपोतान्सार्षपतैलभृष्टान्मधुपयोभ्यां सहाभ्यवहरेत् । तन्मूलं हि शोणिताभिष्यन्दधमनीप्रतिचयापस्मारशंखकगलगण्डरोहिणीकानामन्यतमं प्राप्नोत्यथवा मरणमिति ॥ ११२ ॥

न मूलकलशुनकृष्णगन्धार्जकसुमुखसुरसादीनि भक्षयित्वा पयः सेव्यं कुष्ठाबाधभयात् ॥ ११३ ॥

न वास्तुशाकं न लिकुचं पक्वं मधुपयोभ्यां सहोपयोज्यम् । एतद्धि मरणायाथवा बलवर्णतेजोवीर्योपरोधायालघुव्याधये षाण्ड्याय च ॥ ११४ ॥

तदेव लिकुचपक्वं न माषसूपगुडसर्पिर्भिः सहोपयोज्यं वैरोधकत्वात् ॥ ११५ ॥

तथाम्रातकमातुलुङ्गलिकुचकरमर्दमोचदन्तशठबदरकोशाम्रभव्यजाम्बवकपित्थतिन्तिडीकपारावताक्षोटपनसनालिकेरदाडिमामलकान्येवंप्रकाराणि चान्यानि सर्वं चाम्लं द्रवं अद्रवं च पयसा सह विरुद्धम् ॥ ११६

कङ्गुवरकमकुष्ठककुलत्थमाषनिष्पावाः पयसा सह विरुद्धाः पञ्चोत्तरिकाशाकं शार्करो मरेयो मधु च सहोपयुक्तं विरुद्धं वातं चातिकोपयति ॥ ११७ ॥

हारिद्रकः सर्षपतैलभृष्टो विरुद्धपित्तं चातिकोपयति। पायसो मन्थानुपानो विरुद्धः। उपोदिका तिलकल्कसिद्धा हेतुरतीसारस्य॥११८

बलाका वारुण्या कुल्माषैरपि विरुद्धा। सैव सूकरवसापरिभृष्टा सद्यो व्यापादयति ॥ ११९ ॥

मायूरमांसमेरण्डसीसकासक्तमेरण्डाग्निप्लुष्टं सद्यो व्यापादयति ॥ १२० ॥

तदेव भस्मपांसुपरिध्वस्तं सक्षौद्रं मरणाय ॥ १२१ ॥

हारीतकमांसं हारिद्राग्निप्लुष्टं सद्यो व्यापादयति।

मत्स्यतैलनिस्ताडनसिद्धाः पिप्पल्यस्तथा काकमाची मधु च मरणाय ॥ १२२ ॥

मधु चोष्णमुष्णार्तस्य च मधु मरणाय ॥ १२३ ॥

मधुसर्पिषी तुल्ये मधु वारि चान्तरिक्षं समघृतं मधुपुष्करबीजं मधु पीत्वोष्णोदकं भल्लातकोष्णोदकम् ॥ १२४ ॥

तक्रसिद्धः कम्पिल्लकः पर्युषिता काकमाची अङ्गारशूल्यो भास इति विरुद्धानीत्येतद्यथाप्रश्नमभिनिर्दिष्टम् ॥ १२५ ॥

भवन्ति चात्र श्लोकाः।

यत्किंचिद्दोषमासाद्य न निर्हरति कायतः।
आहारजातं तत्सर्वमहितायोपपद्यते ॥ १२६ ॥
यच्चापि देशकालाग्निसात्म्यासात्म्यानिलादिभिः।
संस्कारतो वीर्यतश्च कोष्ठावस्थाक्रमैरपि ॥ १२७ ॥
परिहारोपचाराभ्यां पाकात्संयोगतोऽपि च।
विरुद्धं तच्च न हितं हृत्संपद्विधिभिश्च यत् ॥ १२८ ॥
विरुद्धं देशतस्तावद्रूक्षतीक्ष्णादिधन्वनि।
आनूपे स्निग्धशीतादि भेषजं यन्निषेव्यते ॥ १२९ ॥
कालतोऽपि विरुद्धं यच्छीतरूक्षादिसेवनम्।
शीते काले तथोष्णे च कटुकोष्णादिसेवनम् ॥ १३० ॥
विरुद्धमनले तद्वदन्नानुरूपं चतुर्विधे।
मधुसर्पिः समघृतं मात्रया तद्विरुध्यते ॥ १३१ ॥

कटुकोष्णादिसात्म्यस्य स्वादुशीतादिसेवनम् ।
यत्तत्सात्म्यविरुद्धं तु विरुद्धं त्वनलादिभिः ॥ १३२ ॥
या समानगुणाभ्यासविरुद्धान्नौषधक्रिया ।
संस्कारतो विरुद्धं तद्यद्भोज्यं विषवद्भजेत् ॥ १३३ ॥
ऐरण्डसीसकासक्तं शिखिमांसं तथैव हि ।
विरुद्धं वीर्यतो ज्ञेयं वीर्यतः शीतलात्मकम् ॥ १३४ ॥
तत्संयोज्योष्णवीर्येण द्रव्येण सह सेव्यते ।
क्रूरकोष्ठस्य चात्यल्पमन्दवीर्यमभेदनम् ॥ १३५ ॥
मृदुकोष्ठस्य गुरु च भेदनीयं तथा बहु ।
एतत्कोष्ठविरुद्धं तु विरुद्धं स्यादवस्थया ॥ १३६ ॥
श्रमव्यवायव्यायामसक्तस्यानिलकोपनम् ।
निद्रालसस्यालसस्य भोजनं श्लेष्मकोपनम् ॥ १३७ ॥
यच्चानुत्सृज्य विण्मूत्रं भुंक्ते यश्चाबुभुक्षितः ।
तच्च कर्म विरुद्धं स्याद्यच्चातिक्षुद्वशानुगः ॥ १३८ ॥
परहारविरुद्धं तु वराहादीन्निषेव्य यत् ।
सेवेतोष्णं घृतादींश्च पीत्वा शीतं निषेवते ॥ १३९ ॥
विरुद्धं पाकतश्चापि दुष्टदुर्दारुसाधितम् ।
अपक्वतण्डुलात्यर्थपक्वदग्धं च यद्भवेत् ॥ १४० ॥
संयोगतो विरुद्धं तद्यथाम्लं पयसा सह ।
अमनोरुचितं यच्च हृद्विरुद्धं तदुच्यते ॥ १४१ ॥
संपद्विरुद्धं तद्विद्यादसंजातरसं तु तत् ।
अतिक्रान्तरसं वापि विपन्नरसमेव वा ॥ १४२ ॥
ज्ञेयं विधिविरुद्धं तु भुज्यते निभृतेन यत् ।
तदेवंविधमन्नं स्याद्विरुद्धमुपयोजितम् ॥ १४३ ॥
सात्म्यतोऽल्पतया वापि दीप्ताग्नेस्तरुणस्य च ।
स्नेहव्यायामबलिनो विरुद्धं वितथं भवेत् । १४४ ॥
षाण्ड्यान्ध्यवीसर्पदकोदराणां विस्फोटकोन्मादभगन्दराणाम् ।
मूर्च्छामदाध्मानगलग्रहाणां पाण्ड्वामयस्यामविषस्य चैव ॥ १४५ ॥

किलासकुष्ठग्रहणीगदानां शोफास्रपित्तज्वरपीनसानाम्।
संतानदोषस्य तथैव मृत्योर्विरुद्धमन्नं प्रवदन्ति हेतुम्॥ १४६॥

एषां च खलु परेषां च वैरोधिकनिमित्तानां व्याधीनामिमे भावाः [1]प्रतिकाराः। यथा वमनं विरेचनं च तद्विरोधिनां च द्रव्याणां संशमनार्थमुपयोगस्तथाविधैश्च द्रव्यैः पूर्वमभिसंस्कारः शरीरस्येति १४७

भवति चात्र।

विरुद्धाशनजान्रोगान्प्रतिहन्ति विरेचनम्।
वमनं शमनं चैव पूर्वं वाहितसेवनम्॥ १४८॥"

तत्र श्लोकाः।

मतिरासीन्महर्षीणां या या रसविनिश्चये।
द्रव्याणि गुणकर्मभ्यां द्रव्यसंख्या रसाश्रयाः॥ १४९॥
कारणं रससंख्या च रसानुरसलक्षणम्।
परादीनां गुणानां च लक्षणानि पृथक् पृथक्॥ १५०॥
पञ्चात्मकानां षट्त्वं च रसानां येन हेतुना।
ऊर्ध्वानुलोमभाजश्च यद्गुणातिशयाद्रसाः॥ १५१॥
षण्णां रसानां षट् चैव सुविभक्ता विभक्तयः।
उद्देशश्चापविद्धश्च द्रव्याणां गुणकर्मणि॥ १५२॥
प्रवरावरमध्यत्वं रसानां गौरवादिषु।
पाकप्रभावयोर्लिङ्गं वीर्यसंख्याविनिश्चयः॥ १५३॥
षण्णामास्वाद्यमानानां रसानां यत्स्वलक्षणम्।
यद्यद्विरुध्यते यस्माद्येन यत्कारि चैव यत्॥ १५४॥
वैरोधिकनिमित्तानां व्याधीनामौषधं च यत्।
आत्रेयभद्रकाप्यीये तत्सर्वमवदन्मुनिः॥ १५५॥

इत्यन्नपानचतुष्के आत्रेयभद्रकाप्यीयो नाम षड्विंशोऽध्यायः समाप्तः।

---

१. प्रतिघातकरा.

# सप्तविंशोऽध्यायः ।

## अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः ।

### इति ह स्माह भगवानात्रेयः ।

"इष्टवर्णगन्धरसस्पर्शं विधिविहितमन्नपानं प्राणिनां प्राणसंज्ञकानां प्राणमाचक्षते कुशलाः । प्रत्यक्षफलदर्शनात्तदिन्धना ह्यन्तराग्नेः स्थितिस्तत एव सत्त्वमूर्जयति । तच्छरीरधातुव्यूहबलवर्णेन्द्रियप्रसादकरं यथोक्तमुपसेव्यमानं विपरीतमहिताय संपद्यते ॥ १ ॥

तस्माद्धिताहितावबोधनार्थमन्नपानविधिमखिलेनोपदेक्ष्यामोऽग्निवेश ॥ २ ॥

तत्स्वभावादुदकं क्लेदयति, लवणं विष्यन्दयति, क्षारः पाचयति, मधु संदधाति, सर्पिः स्नेहयति, क्षीरं जीवयति, मांसं बृंहयति, रसः प्रीणयति, सुरा जर्जरीकरोति, शीधु अवधमयति, द्राक्षारसो दीपयति, फाणितमाचिनोति, दधि शोफं जनयति, पिण्याकशाकं ग्लपयति, प्रभूतान्तर्मलो माषसूपः, दृष्टिशुक्रघ्नः क्षारः, प्रायः पित्तलमम्लमन्यत्र मधुनः पुराणाच्च शालियवगोधूमात्, प्रायः सर्वं तिक्तं वातलमवृष्यं चान्यत्र वेत्राग्रपटोलात्, प्रायः कटुकं वातलमवृष्यं चान्यत्र पिप्पलीविश्वभेषजात् ॥ ३ ॥

परमतो वर्गसंग्रहेणाहारद्रव्याण्यनुव्याख्यास्यामः ॥ ४ ॥

शूकधान्यशमीधान्यमांसशाकफलाश्रयान् ।
वर्गान्हरितमद्याम्बुगोरसेक्षुविकारिकान् ॥ ५ ॥
दश द्वौ च परौ वर्गौ कृतान्नाहारयोगिनाम् ।
रसवीर्यविपाकैश्च प्रभावैश्चोपदेक्ष्यते ॥ ६ ॥

अथ शूकधान्यवर्गः ।

रक्तशालिर्महाशालिः कलमः शकुनाहृतः ।
चूर्णको दीर्घशूकश्च गौरः पाण्डुकलाङ्गुलौ ॥ ७ ॥
सुगन्धिकालोहवालाः शालिवाख्याः प्रमोदकाः ।
पतङ्गास्तपनीयाश्च ये चान्ये शालयः शुभाः ॥ ८ ॥

शीता रसे विपाके च मधुराः स्वल्पमारुताः ।
बद्धाल्पवर्चसः स्निग्धा बृंहणाः शुक्रमूत्रलाः ॥ ९ ॥
रक्तशालिर्वरस्तेषां तृष्णाघ्नस्त्रिमलापहः ।
महांस्तस्यानु कलमस्तस्याप्यनु ततः परे ॥ १० ॥
यवका हायनाः पांशुवाप्यो नैषधकादयः ।
शालीनां शालयः कुर्वन्त्यनुकारं गुणागुणैः ॥ ११ ॥
शीतः स्निग्धो गुरुः स्वादुस्त्रिदोषघ्नः स्थिरात्मकः ।
षष्टिकः प्रवरो गौरः कृष्णगौरस्ततोऽनु च ॥ १२ ॥
वरकोद्दालकौ चीनशारदोज्ज्वलदर्दुराः ।
गन्धलाः कुरुविन्दाश्च षष्टिकाल्पान्तरा गुणैः ॥ १३ ॥
मधुरश्चाम्लपाकश्च व्रीहिः पित्तकरो गुरुः ।
बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः ॥ १४ ॥
सकोरदूषः श्यामाकः कषायमधुरो लघुः ।
वातलः कफपित्तघ्नः शीतसंग्राहिशोषणः ॥ १५ ॥
हस्तिश्यामाकनीवारतोयपर्णीगवेधुकाः ।
प्रशातिकाम्भःश्यामाकलौहित्याणुप्रियङ्गवः ॥ १६ ॥
मुकुन्दझिण्टिगर्मूटीचरुकावरकास्तथा ।
शिबिरोत्कटजूर्णाह्वः श्यामाकसदृशा गुणैः ॥ १७ ॥
रूक्षः शीतो गुरुः स्वादुः बहुवातशकृद्यवः ।
स्थैर्यकृत्सकषायस्तु बल्यः श्लेष्मविकारनुत् ॥ १८ ॥
रूक्षः कषायानुरसो मधुरः कफपित्तहा ।
मेदःक्रिमिविषघ्नश्च बल्यो वेणुयवो मतः ॥ १९ ॥
सन्धानकृद्वातहरो गोधूमः स्वादुशीतलः ।
जीवनो बृंहणो वृष्यः स्निग्धः स्थैर्यकरो गुरुः ॥ २० ॥
नान्दीमुखी मधूली च मधुरस्निग्धशीतले ।
इत्ययं शूकधान्यानां पूर्वो वर्गः समाप्यते ॥ २१ ॥

इति शूकधान्यवर्गः ।

अथ शमीधान्यवर्गः ।

कषायमधुरो रूक्षः शीतः पाके कटुर्लघुः ।
विशदः श्लेष्मपित्तघ्नो मुद्गः सूप्योत्तमो मतः ॥ २२ ॥
रूक्षश्चैव कषायश्च वातलः श्लेष्मपित्तहा ।
विष्टम्भी चाप्यवृष्यश्च राजमाषः प्रकीर्तितः ॥ २३ ॥
वृष्यः परं वातहरः स्निग्धोष्णमधुरो गुरुः ।
बल्यो बहुमलः पुंस्त्वं माषः शीघ्रं ददाति च ॥ २४ ॥
उष्णाः कषायाः पाकेऽम्लाः कफशुक्रानिलापहाः ।
कुलत्था ग्राहिणः कासहिक्काश्वासार्शसां हिताः ॥ २५ ॥
मधुरा मधुराः पाके ग्राहिणो रूक्षशीतलाः ।
मकुष्टकाः प्रशस्यन्ते रक्तपित्तज्वरादिषु ॥ २६ ॥
चणकाश्च मसूराश्च खण्डिकाः सहरेणवः ।
लघवः शीतमधुराः सकषाया विरूक्षणाः ॥ २७ ॥
पित्तश्लेष्मणि शस्यन्ते सूपेष्वालेपनेषु च ।
तेषां मसूरः संग्राही कषायो वातलः परम् ॥ २८ ॥
स्निग्धोष्णमधुरस्तीक्ष्णः कषायः कटुकस्तिलः ।
त्वच्यः केश्यश्च बल्यश्च वातघ्नः कफपित्तकृत् ॥ २९ ॥
गुर्व्योऽथ मधुराः शीता बलघ्ना रूक्षणात्मिकाः ।
सस्नेहा बलिभिर्भोज्या विविधाः शिम्बिजातयः ॥ ३० ॥
आढकी कफपित्तघ्नी वातला कफवातनुत् ।
अवल्गुजः सैडगजो निष्पावा वातपित्तलाः ॥ ३१ ॥
काकाण्डोलात्मगुप्तानां माषवत्फलमादिशेत् ।
द्वितीयोऽयं शमीधान्यवर्गः प्रोक्तो महर्षिणा ॥ ३२ ॥"

इति शमीधान्यवर्गः ।

अथ मांसवर्गः ।

गोखराश्वतरोष्ट्राश्वद्वीपिसिंहर्क्षवानराः ।
वृको व्याघ्रस्तरक्षुश्च बभ्रुमार्जारमूषिकाः ॥ ३३ ॥

लोपाको जम्बुकः श्येनो वान्तादश्चापचायसौ ।
शशघ्नी मधुहा भासो गृध्रोलूककुलिङ्गकाः ॥ ३४ ॥
धूमीका कुररश्चेति प्रसहा मृगपक्षिणः ।
श्वेतः श्यामश्चित्रपृष्ठः कालकः काकुलीमृगः ॥ ३५ ॥
कुचीका चिल्लको भेको गोधा शल्लकगण्डकौ ।
कदली नकुलः श्वाविदिति भूमिशयाः स्मृताः ॥ ३६ ॥
सृमरश्चमरः खड्गो महिषो गवयो गजः ।
न्यङ्कुर्वराहश्चानूपा मृगाः सर्वे रुरुस्तथा ॥ ३७ ॥
कूर्मः कर्कटको मत्स्यः शिशुमारस्तिमिङ्गिलः ।
शुक्तिशङ्खोद्रकुम्भीरचुलुकीमकरादयः ॥ ३८ ॥
इति वारिशयाः प्रोक्ता वक्ष्यन्ते वारिचारिणः ।
हंसः क्रौञ्चो बलाका च बकः कारण्डवः प्लवः ॥ ३९ ॥
शरारी पुष्कराह्वश्च केशरी मानतुण्डकः ।
मृणालकण्ठो मद्गुश्च कादम्बः काकतुण्डकः ॥ ४० ॥
उत्क्रोशः पुण्डरीकाक्षो मेघरावोऽम्बुकुक्कुटी ।
आरानन्दीमुखीवाटी सुमुखाः सहचारिणः ॥ ४१ ॥
रोहिणी कामकाली च सारसो रक्तशीर्षकः ।
चक्रवाकास्तथान्ये च खगाः सन्त्यम्बुचारिणः ॥ ४२ ॥
पृषतः शरभो रामः श्वदंष्ट्रा मृगमातृकाः ।
शशोरणौ कुरङ्गश्च गोकर्णः कोट्टकारकः ॥ ४३ ॥
चारुष्को हरिणैणौ च शम्बरः कालपुच्छकः ।
ऋष्यश्च तरपोतश्च विज्ञेया जाङ्गला मृगाः ॥ ४४ ॥
लावो वर्तीरकश्चैव वार्तीकः सकपिञ्जलः ।
चकोरश्चोपचक्रकश्च कुक्कुटो रक्तवर्तकः ॥ ४५ ॥
लावाद्या विष्किरास्त्वेते वक्ष्यन्ते वर्तकादयः ।
वर्तको वर्तिका चैव बर्ही तित्तिरिकुक्कुटौ ॥ ४६ ॥
कङ्कसारपदेन्द्राभगोनर्दगिरिवर्तकाः ।
क्रकरोऽवकरश्चैव वराहश्चेति विष्किराः ॥ ४७ ॥
शतपत्रो भृङ्गराजः कोयष्टी जीवजीवकः ।

कैरातः कोकिलोऽत्यूहो गोपापुत्रः प्रियात्मजः ॥ ४८ ॥
लट्टा लट्टषको बभ्रुर्वटहा डिण्डिमानकः ।
जटी दुन्दुभिवाक्कावलोहपृष्ठकुलिङ्गकाः ॥ ४९ ॥
कपोतशुकसारङ्गाश्चिरिटीकङ्कुयष्टिकाः ।
शारिका कलविङ्कश्च चटकोऽङ्गारचूडकः ॥ ५० ॥
पारावतः पाण्डविक इत्युक्ताः प्रतुदा द्विजाः ।
प्रसह्य भक्षयन्तीति प्रसहास्तेन संज्ञिताः ॥ ५१ ॥
भूशया बिलवासित्वादानूपानूपसंश्रयात् ।
जले निवासाज्जलजा जलचर्याज्जलेचराः ।
स्थलजा जाङ्गलाः प्रोक्ता मृगा जाङ्गलचारिणः ॥ ५२ ॥
विकीर्य विष्किराश्चेति प्रतुद्य प्रतुदाः स्मृताः ।
"योनिरष्टविधा त्वेषां मांसानां परिकीर्तिता ॥ ५३ ॥
प्रसहा भूशयानूपवारिजा वारिचारिणः ।
गुरूष्णस्निग्धमधुरा बलोपचयवर्धनाः ॥ ५४ ॥
वृष्याः परं वातहराः कफपित्ताभिवर्धिनः ।
हिता व्यायामनित्यानां नरा दीप्ताग्नयश्च ये ॥ ५५ ॥
प्रसहानां विशेषेण मांसं मांसाशिनां भिषक् ।
जीर्णार्शोग्रहणीदोषशोषार्तानां प्रयोजयेत् ॥ ५६ ॥
लावाद्यो वैष्किरो वर्गः प्रतुदा जाङ्गला मृगाः ।
लघवः शीतमधुराः सकषाया हिता नृणाम् ॥ ५७ ॥
पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ।
विष्करावर्तकाद्यास्तु प्रसहाल्पान्तरा गुणैः ॥ ५८ ॥
नातिशीतगुरुस्निग्धं मांसमाजमदोषलम् ।
शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ॥ ५९ ॥
मांसं मधुरशीतत्वाद्गुरुबृंहणमाविकम् ।
योनावजाविके मिश्रगोचरत्वादनिश्चिते ॥ ६० ॥"
सामान्येनोपदिष्टानां मांसानां स्वगुणैः पृथक् ।
केषांचिद्गुणवैशेष्याद्विशेष उपदेक्ष्यते ॥ ६१ ॥
दर्शनश्रोत्रमेधाग्निवयोवर्णस्वरायुषाम् ।

वर्हो हिततमो बल्यो वातघ्नो मांसशुक्रलः ॥ ६२ ॥
गुरूष्णस्निग्धमधुराः स्वरवर्णबलप्रदाः ।
बृंहणाः शुक्रलाश्चोक्ता हंसा मारुतनाशनाः ॥ ६३ ॥
स्निग्धाश्चोष्णाश्च वृष्याश्च बृंहणाः स्वरबोधनाः ।
बल्याः परं वातहराः स्वेदनाश्चरणायुधाः ॥ ६४ ॥
गुरूष्णमधुरो नातिधन्वानूपनिषेवणात् ।
तित्तिरिः संजयेच्छीघ्रं त्रीन्दोषाननिलोल्बणान् ॥ ६५ ॥
पित्तश्लेष्मविकारेषु सरक्तेषु कपिञ्जलाः ।
मन्दवातेषु शस्यन्ते शैत्यमाधुर्यलाघवात् ॥ ६६ ॥
लावाः कषायमधुरा लघवोऽग्निविवर्धनाः ।
संनिपातप्रशमनाः कटुकाश्च विपाकतः ।
कषायमधुराः शीता रक्तपित्तनिबर्हणाः ॥ ६७ ॥
विपाके मधुराश्चैव कपोता गृहवासिनः ।
तेभ्यो लघुतराः किंचित्कपोता वनवासिनः ॥ ६८ ॥
शीताः संग्राहिणश्चैव स्वल्पमूत्राश्च ते मताः ।
शुकमांसं कषायाम्लं विपाके रूक्षशीतलम् ॥ ६९ ॥
शोषकासक्षयहितं संग्राहि लघु दीपनम् ।
कषायविशदो रूक्षः शीतः पाके कटुर्लघुः ॥ ७० ॥
शशः स्वादुः प्रशस्तश्च संनिपातेऽनिलावरे ।
चटका मधुराः स्निग्धा बलशुक्रविवर्धनाः ॥ ७१ ॥
संनिपातप्रशमनाः शमना मारुतस्य च ।
मधुराः कटुकाः पाके त्रिदोषशमनाः शिवाः ॥ ७२ ॥
लघवो बद्धविण्मूत्राः शीताश्चैणाः प्रकीर्तिताः ।
गोधा विपाके मधुराः कषायकटुका रसे ॥ ७३ ॥
वातपित्तप्रशमनी बृंहणी बलवर्धनी ।
शल्लको मधुराम्लस्तु विपाके कटुकः स्मृतः ।
वातपित्तकफघ्नश्च कासश्वासहरस्तथा ॥ ७४ ॥
शैवलाहारभोजित्वात्स्वप्नस्य च विवर्जनात् ॥ ७५ ॥
रोहितो दीपनीयश्च लघुपाको महाबलः ।

५

गुरूष्णमधुरा बल्या बृंहणाः पवनापहाः ॥ ७६ ॥
मत्स्याः स्निग्धाश्च वृष्याश्च बहुदोषाः प्रकीर्तिताः ।
स्नेहनं बृंहणं वृष्यं श्रमघ्नमनिलापहम् ॥ ७७ ॥
बल्यो वातहरो वृष्यश्चक्षुष्यो बलवर्धनः ।
मेधास्मृतिकरः पथ्यः शोषघ्नः कूर्म उच्यते ।
वराहपिशितं बल्यं रोचनं स्वेदनं गुरु ॥ ७८ ॥
गव्यं केवलवातेषु पीनसे विषमज्वरे ।
शुष्ककासश्रमात्यग्निमांसक्षयहितं च यत् ॥ ७९ ॥
स्निग्धोष्णमधुरं वृष्यं माहिषं गुरु तर्पणम् ।
दार्ढ्यं बृहत्त्वमुत्साहं स्वप्नं च जनयत्यपि ॥ ८० ॥
धार्तराष्ट्रचकोराणां दक्षाणां शिखिनामपि ।
चटकानां च यानि स्युरण्डानि च हितानि च ॥ ८१ ॥
रेतःक्षीणेषु कासेषु हृद्रोगेषु क्षतेषु च ।
मधुराण्यवपाकीनि सद्यो बलकराणि च ॥ ८२ ॥
शरीरबृंहणे नान्यद्दार्ढ्यं मांसाद्विशिष्यते ।
इति वर्गस्तृतीयोऽयं मांसानां परिकीर्तितः ॥ ८३ ॥

इति मांसवर्गः ।

अथ शाकवर्गः ।

"पाठा तुषा शठी शाकं वास्तुकं सुनिषण्णकम् ।
विद्याद्ग्राहि त्रिदोषघ्नं भिन्नवर्चस्तु वास्तुकम् ॥ ८४ ॥
त्रिदोषशमनी वृष्या काकमाची रसायनी ।
नात्युष्णशीतवीर्या च भेदनी कुष्ठनाशनी ॥ ८५ ॥
राजक्षवकशाकं तु त्रिदोषशमनं लघु ।
ग्राहि शस्तं विशेषेण ग्रहण्यर्शोविकारिणाम् ॥ ८६ ॥
कालशाकं तु कटुकं दीपनं गरशोफजित् ।
लघूष्णं वातलं रूक्षं करालं शाकमुच्यते ॥ ८७ ॥
दीपनी चोष्णवीर्या च ग्राहिणी कफमारुते ।
प्रशस्यतेऽम्लचाङ्गेरी ग्रहण्यर्शोहिता च सा ॥ ८८ ॥
मधुरा मधुरा पाके भेदनी श्लेष्मवर्धनी ।

वृष्या स्निग्धा च शीता च मदघ्नी चाप्युपोदिका ॥ ८९ ॥
रूक्षो मदविषघ्नश्च प्रशस्तो रक्तपित्तिनाम् ।
मधुरो मधुरः पाके शीतलस्तण्डुलीयकः ॥ ९० ॥
मण्डूकपर्णी वेत्राग्रं कुचेला वनतिक्तकम् ।
कर्कोटकावल्गुजकौ पटोलं शकुलादनी ॥ ९१ ॥
वृषपुष्पाणि शार्ङ्गेष्टा केवूकं सकठिल्लकम् ।
नाडीकलायं गोजिह्वा वार्ताकं तिलपर्णिका ।
कुलकं कर्कशं निम्बं शाकं पर्पटकं च यत् ॥ ९२ ॥
कफपित्तहरं तिक्तं शीतं कटु विपच्यते ।
सर्वाणि सूप्यशाकानि फञ्जी चिल्लीकतुम्बुकः ॥ ९३ ॥
आलुकानि च सर्वाणि सपत्राणि कठिञ्जरः ।
शणशाल्मलिपुष्पाणि कर्बुदारः सुवर्चला ॥ ९४ ॥
निष्पावः कोविदारश्च पत्तुरश्चाखुपर्णिका ।
कुमारजीवो लोट्टाकपालङ्क्या मारिषस्तथा ॥ ९५ ॥
कलम्बो नालिका स्पर्युः कुसुम्भवृकधूमकौ ।
लक्ष्मणश्च प्रपुन्नाडो नलिनीका कुबेरकः ॥ ९६ ॥
लोणिका यवशाकं च कूष्माण्डकमवल्गुजः ।
यातुकः शालकल्याणी त्रिपर्णी पीलुपर्णिका ॥ ९७ ॥
शाकं गुरु च रूक्षं च प्रायो विष्टभ्य जीर्यति ।
मधुरं शीतवीर्यं च पुरीषस्य च भेदनम् ॥ ९८ ॥
स्विन्नं निष्पीडितरसं स्नेहाढ्यं तत्प्रशस्यते ।
शणस्य कोविदारस्य कर्बुदारस्य शाल्मलेः ॥ ९९ ॥
पुष्पं ग्राहि प्रशस्तं च रक्तपित्ते विशेषतः ।
न्यग्रोधोदुम्बराश्वत्थप्लक्षपद्मादिपल्लवाः ॥ १०० ॥
कषायाः स्तम्भनाः शीता हिताः पित्तातिसारिणाम् ।
वायुं वत्सादनी हन्यात्कफं गण्डीरचित्रकौ ॥ १०१ ॥
श्रेयसी बिल्वपर्णी च बिल्वपत्रं तु वातनुत् ।
भाण्डी शतावरी शाकं बलाजीवन्तिजं च यत् ॥ १०२ ॥
पर्वण्याः पर्वपुष्प्याश्च वातपित्तहरं स्मृतम् ।

लघु भिन्नशकृत्तिक्तं लाङ्गलक्युरुबूकयोः ॥ १०३ ॥
तिलवेतसशाकं च शाकं पञ्चाङ्गुलस्य वा ।
वातलं कटुतिक्ताम्लमधोमार्गप्रवर्तकम् ॥ १०४ ॥
रूक्षाम्लमुष्णं कौसुम्भं कफघ्नं पित्तवर्धनम् ।
त्रपुसैर्वारुकं स्वादु गुरु विष्टम्भि शीतलम् ॥ १०५ ॥
मुखप्रियं च रूक्षं च मूत्रलं त्रपुसं त्वति ।
एर्वारुकं च संपक्वं दाहतृष्णाक्लमार्तिनुत् ।
वर्चोभेदीन्यलाबूनि रूक्षशीतगुरूणि च ॥ १०६ ॥
चिर्भट्युर्वारुके तद्वद्वर्चोभेदहिते तु ते ।
कूष्माण्डमुक्तं सक्षारं मधुराम्लं तथा लघु ॥ १०७ ॥
सृष्टमूत्रपुरीषं च सर्वदोषनिबर्हणम् ।
केलूटं च कदम्बं च नदीमाषकमैन्दुकम् ॥ १०८ ॥
विशदं गुरु शीतं च समभिष्यन्दि चोच्यते ।
उत्पलानि कषायाणि पित्तरक्तहराणि च ॥ १०९ ॥
तथा तालप्रलम्बं च उरःक्षतरुजापहम् ।
खर्जूरं तालशस्यं च रक्तपित्तक्षयापहम् ॥ ११० ॥
भरूटं बिसशालूकक्रौञ्चादनकशेरुकम् ।
शृङ्गाटकं कलोड्यं च गुरु विष्टम्भि शीतलम् ।
कुमुदोत्पलनालास्तु सपुष्पाः सफलाः स्मृताः ॥ १११ ॥
शीताः स्वादुकषायास्तु कफमारुतकोपनाः ।
कषायमीषद्विष्टम्भि रक्तपित्तहरं स्मृतम् ॥ ११२ ॥
पौष्करं तु भवेद्बीजं मधुरं रसपाकयोः ।
बल्यः शीतो गुरुः स्निग्धस्तर्पणो बृंहणात्मकः ॥ ११३ ॥
वातपित्तहरः स्वादुर्वृष्यो मुञ्जातकः स्मृतः ।
जीवनो बृंहणो वृष्यः कण्ठ्यः शस्तो रसायने ॥ ११४ ॥
विदारीकन्दो बल्यश्च मूत्रलः स्वादुशीतलः ।
अम्लीकायाः स्मृतः कन्दो ग्रहण्यर्शोहितो लघुः ॥ ११५ ॥
नात्युष्णः कफवातघ्नो ग्राही शस्तो मदात्यये ।
त्रिदोषं बद्धविण्मूत्रं सार्षपं शाकमुच्यते ॥ ११६ ॥

तद्वत्पिण्डालुकं विद्यात्कन्दत्वाच्च मुखप्रियम् ।
सर्पच्छत्राकवर्ज्यास्तु बह्व्योऽन्यच्छत्रजातयः ॥ ११७ ॥
शीताः पीनसकर्त्र्यश्च मधुरा गुर्व्य एव च ।
चतुर्थः शाकवर्गोऽयं पत्रकन्दफलाश्रयः ॥ ११८ ॥

इति शाकवर्गः ।

अथ फलवर्गः ।

तृष्णादाहज्वरश्वासरक्तपित्तक्षतक्षयान् ।
वातपित्तमुदावर्तं स्वरभेदं मदात्ययम् ॥ ११९ ॥
तिक्तास्यतामास्यशोषं कासं चाशु व्यपोहति ।
मृद्वीका बृंहणी वृष्या मधुरस्निग्धशीतला ॥ १२० ॥
मधुरं बृंहणं वृष्यं खर्जूरं गुरु शीतलम् ।
क्षयेऽभिघाते दाहे च वातपित्ते च तद्धितम् ॥ १२१ ॥
तर्पणं बृंहणं फल्गु गुरु विष्टम्भि शीतलम् ।
परूपकं मधूकं च वातपित्ते च शस्यते ॥ १२२ ॥
मधुरं बृंहणं बल्यमाम्रातं तर्पणं गुरु ।
सस्नेहं श्लेष्मलं शीतं वृष्यं विष्टभ्य जीर्यति ॥ १२३ ॥
तालशस्यानि सिद्धानि नारिकेलफलानि च ।
बृंहणस्निग्धशीतानि बल्यानि मधुराणि च ॥ १२४ ॥
मधुराम्लकषायं च विष्टम्भि गुरु शीतलम् ।
पित्तश्लेष्महरं भव्यं ग्राहि वक्त्रविशोधनम् ॥ १२५ ॥
अम्लं परूपकं द्राक्षा बदर्याण्यारुकाणि च ।
पित्तश्लेष्मप्रकोपीणि कर्कन्धुलकुचान्यपि ॥ १२६ ॥
नात्युष्णं गुरु संपक्वं स्वादुप्रायं मुखप्रियम् ।
बृंहणं जीर्यति क्षिप्रं नातिदोषलमारुकम् ॥ १२७ ॥
द्विविधं शीतमुष्णं च मधुरं चाम्लमेव च ।
गुरु पाके च तज्ज्ञेयमरुच्यत्यग्निनाशनम् ॥ १२८ ॥
भव्यादल्पान्तरगुणं काश्मर्यफलमुच्यते ।
अथवाल्पान्तरगुणं तूदमम्लं परूषकम् ॥ १२९ ॥
कषायमधुरं टङ्कं वातलं गुरु शीतलम् ।

कपित्थं विषकण्ठघ्नमामं संग्राहि वातलम् ॥ १३० ॥
मधुराम्लकषायत्वात्सौगन्ध्याच्च रुचिप्रदम् ।
परिपक्वं सदोषघ्नं विषघ्नं ग्राहि गुर्वपि ॥ १३१ ॥
दुर्जरं बिल्वसिद्धं तु दोषलं पूतिमारुतम् ।
स्निग्धोष्णतीक्ष्णं तद्बालं दीपनं कफवातजित् ॥ १३२ ॥
वातपित्तकरं बालमापूर्णं पित्तवर्धनम् ।
पक्वमाम्रं जयेद्वायुं मांसशुक्रबलप्रदम् ॥ १३३ ॥
कषायमधुरप्रायं गुरु विष्टम्भि शीतलम् ।
जाम्बवं कफपित्तघ्नं ग्राहि वातकरं परम् ॥ १३४ ॥
मधुरं बदरं स्निग्धं भेदनं वातपित्तजित् ।
तच्छुष्कं कफवातघ्नं पित्तेन च विरुध्यते ।
कषायमधुरं शीतं ग्राहि सिंचितिकाफलम् ॥ १३५ ॥
गाङ्गेरुकी करीरं च बिम्बी तोदनधन्वनम् ।
मधुरं सकषायं च शीतं पित्तकफापहम् ॥ १३६ ॥
क्षीरिकं पनसं मोचं राजादनफलानि च ।
स्वादूनि सकषायाणि स्निग्धशीतगुरूणि च ॥ १३७ ॥
कषायविशदत्वाच्च सौगन्ध्याच्च रुचिप्रदम् ।
अवदंशक्षमं रूक्षं वातलं लवलीफलम् ॥ १३८ ॥
नीपं सभार्गकं पीलु तृणशून्यं विकंकतम् ।
प्राचीनामलकं चैव दोषघ्नं गरहारि च ॥ १३९ ॥
इङ्गुदं तिक्तमधुरं स्निग्धोष्णं कफवातजित् ।
तिन्दुकं कफपित्तघ्नं कषायमधुरं लघु ॥ १४० ॥
विद्यादामलके सर्वान्रसांल्लवणवर्जितान् ।
स्वेदमेदःकफोत्क्लेदपित्तरोगविनाशनम् ॥ १४१ ॥
रूक्षं स्वादु कषायाम्लं कफपित्तहरं परम् ।
रसासृङ्मांसमेदोजान्दोषान्हन्ति विभीतकम् ॥ १४२ ॥
अम्लं कषायमधुरं वातघ्नं ग्राहि दीपनम् ।
स्निग्धोष्णं दाडिमं हृद्यं कफपित्ताविरोधि च ॥ १४३ ॥
रूक्षाम्लं दाडिमं यत्तु तत्पित्तानिलकोपनम् ।

मधुरं पित्तनुत्तेषां तद्धि दाडिममुत्तमम् ॥ १४४ ॥
वृक्षाम्लं ग्राहि रूक्षोष्णं वातश्लेष्मणि शस्यते ।
अम्लिकायाः फलं शुष्कं तस्मादल्पान्तरं गुणैः ॥ १४५ ॥
गुणैस्तैरेव संयुक्तं भेदनं त्वम्लवेतसम् ।
शूलेऽरुचौ विबन्धे च मन्देऽग्नौ मद्यविक्षये ॥ १४६ ॥
हिक्काकासे च श्वासे च वम्यां वर्चोगदेषु च ।
वातश्लेष्मसमुत्थेषु सर्वेष्वेतेषु दिश्यते ॥ १४७ ॥
केशरं मातुलुङ्गस्य लघु शीतमतोऽन्यथा ।
रोचनो दीपनो हृद्यः सुगन्धिस्त्वग्निवर्जितः ॥ १४८ ॥
कर्चूरः कफवातघ्नः श्वासहिक्कार्शसां हितः ।
मधुरं किंचिदम्लं च हृद्यं भक्तप्ररोचनम् ॥ १४९ ॥
दुर्जरं वातशमनं नागरङ्गफलं गुरु ।
वातामाभिषुकाक्षोटमकूलकनिकोचकाः ॥ १५० ॥
गुरूष्णस्निग्धमधुराः सोरुमाणा बलप्रदाः ।
वातघ्ना बृंहणा वृष्याः कफपित्ताभिवर्धनाः ॥ १५१ ॥
पियालमेषां सदृशं विद्यादौष्ण्यं विना गुणैः ।
श्लेष्मलं मधुरं शीतं श्लेष्मातकफलं गुरु ॥ १५२ ॥
श्लेष्मलं गुरु विष्टम्भि चाङ्कोटफलमग्निजित् ।
गुरूष्णमधुरं रूक्षं केशघ्नं च शमीफलम् ॥ १५३ ॥
विष्टम्भयति कारञ्जं पित्तश्लेष्माविरोधि च ।
आम्रातकं दन्तशठमम्लं सकरमर्दकम् ॥ १५४ ॥
रक्तपित्तकरं विद्यादैरावतकमेव च ।
वातघ्नं दीपनं चैव वार्ताकं कटु तिक्तकम् ॥ १५५ ॥
वातलं कफपित्तघ्नं विद्यात्पर्पटकीफलम् ।
पित्तश्लेष्मघ्नमम्लं च वातिकं चाक्षिकीफलम् ॥ १५६ ॥
मधुराण्यविपाकीनि वातपित्तहराणि च ।
अश्वत्थोदुम्बरप्लक्षन्यग्रोधानां फलानि च ॥ १५७ ॥
कषायमधुराम्लानि वातलानि गुरूणि च ।
भल्लातकास्थ्यग्निसमं त्वङ्मांसं स्वादु शीतलम् ॥ १५८ ॥

पञ्चमः फलवर्गोऽयमुक्तः प्रायोपयोगिकः ॥ १५९ ॥

इति फलवर्गः ।

अथ हरितवर्गः ।

रोचनं दीपनं वृष्यमार्द्रकं विश्वभेषजम् ।
वातश्लेष्मविबन्धेषु रसस्तस्योपदिश्यते ॥ १६० ॥
रोचनो दीपनस्तीक्ष्णः सुगन्धिर्मुखबोधनः ।
जम्बीरः कफवातघ्नः क्रिमिघ्नो भुक्तपाचनः ॥ १६१ ॥
बालं दोषहरं वृद्धं त्रिदोषं मारुतापहम् ।
स्निग्धसिद्धं विशुष्कं तु मूलकं कफवातजित् ॥ १६२ ॥
हिक्काकासविषश्वासपार्श्वशूलविनाशनः ।
पित्तकृत्कफवातघ्नः सुरसः पूतिगन्धनुत् ॥ १६३ ॥
यवानी चार्जकश्चैव शिग्रु शालेयमृष्टकम् ।
हृद्यान्यास्वादनीयानि पित्तमुत्क्लेशयन्ति च ॥ १६४ ॥
गण्डीरो जलपिप्पल्यस्तुम्बुरुः शृङ्गवेरिका ।
तीक्ष्णोष्णकटुरूक्षाणि कफवातहराणि च ॥ १६५ ॥
पुंस्त्वघ्नः कटुरूक्षोष्णो भूतृणो वक्त्रशोधनः ।
खराश्वा कफवातघ्नी बस्तिरोगरुजापहा ॥ १६६ ॥
धान्यकं चाजगन्धा च सुमुखाश्चेति रोचनाः ।
सुगन्धा नातिकटुका दोषानुत्क्लेशयन्ति तु ॥ १६७ ॥
ग्राही गृञ्जनकस्तीक्ष्णो वातश्लेष्मार्शसां हितः ।
स्वेदनेऽभ्यवहार्ये च योजयेत्तमपित्तिनाम् ॥ १६८ ॥
श्लेष्मलो मारुतघ्नश्च पलाण्डुर्न च पित्तनुत् ।
आहारयोगी बल्यश्च गुरुर्वृष्योऽथ रोचनः ॥ १६९ ॥
क्रिमिकुष्ठकिलासघ्नो वातघ्नो गुल्मनाशनः ।
स्निग्धश्चोष्णश्च वृष्यश्च लशुनः कटुको गुरुः ॥ १७० ॥
शुष्काणि कफवातघ्नान्येतान्येषां फलानि तु ।
हरितानामयं चैषां षष्ठो वर्गः समाप्यते ॥ १७१ ॥

इति हरितवर्गः ।

अथ मद्यवर्गः ।

प्रकृत्या मद्यमम्लोष्णमम्लं चोक्तं विपाकतः ।
सर्वं सामान्यतस्तस्य विशेष उपदेक्ष्यते ॥ १७२ ॥
कृशानां सक्तमूत्राणां ग्रहण्यर्शोविकारिणाम् ।
सुरा प्रशस्ता वातघ्नी स्तन्यरक्तक्षयेषु च ॥ १७३ ॥
हिक्काश्वासप्रतिश्यायकासवर्चोग्रहारुचौ ।
वम्यानाहविबन्धेषु वातघ्नी मदिरा हिता ॥ १७४ ॥
शूलप्रवाहिकाटोपकफवातार्शसां हितः ।
जगलो ग्राहिरूक्षोष्णः शोफघ्नो भुक्तपाचनः ॥ १७५ ॥
शोफार्शोग्रहणीदोषपाण्डुरोगारुचिज्वरान् ।
हन्त्यरिष्टः कफकृतान्रोगान्रोचनदीपनः ॥ १७६ ॥
मुखप्रियः सुखमदः सुगन्धिर्बस्तिरोगनुत् ।
जरणीयः परिणतो हृद्यो वर्ण्यश्च शार्करः ॥ १७७ ॥
रोचनो दीपनो हृद्यः शोषशोफार्शसां हितः ।
स्नेहश्लेष्मविकारघ्नो वर्ण्यः पक्वरसो मतः ॥ १७८ ॥
जरणीयो विबन्धघ्नः स्वरवर्णविशोधनः ।
लेखनः शीतरसिको हितः शोफोदरार्शसाम् ॥ १७९ ॥
सृष्टोऽभिन्नशकृद्वातो गौडस्तर्पणदीपनः ।
पाण्डुरोगव्रणहिता दीपनी चाक्षिकी मता ॥ १८० ॥
सुरासवस्तीव्रमदो वातघ्नो वदनप्रियः ।
छेदी मध्वासवस्तीक्ष्णो मैरेयो मधुरो गुरुः ॥ १८१ ॥
धातक्यभिषुतो हृद्यो रूक्षो रोचनदीपनः ।
माध्वीकवन्न चात्युष्णो मृद्वीकेक्षुरसासवः ॥ १८२ ॥
रोचनं दीपनं हृद्यं बल्यं पित्ताविरोधि च ।
विबन्धघ्नं कफघ्नं च मधु लघ्वल्पमारुतम् ॥ १८३ ॥
सुरा समण्डा रूक्षोष्णा यवानां वातपित्तला ।
गुर्वी जीर्यति विष्टभ्य श्लेष्मलस्तु मधूलकः ॥ १८४ ॥
दीपनं जरणीयं च हृत्पाण्डुक्रिमिरोगनुत् ।
ग्रहण्यर्शोहितं भेदि सौवीरकतुषोदकम् ॥ १८५ ॥

दाहज्वरापहं स्पर्शात्पानाद्वातकफापहम् ।
विबन्धघ्नमविस्रंसि दीपनं चाम्लकाञ्जिकम् ॥ १८६ ॥
प्रायशोऽभिनवं मद्यं गुरुदोषसमीरणम् ।
स्रोतसां शोधनं जीर्णं दीपनं लघु रोचनम् ॥ १८७ ॥
हर्षणं प्रीणनं बल्यं भयशोकश्रमापहम् ।
प्रागल्भ्यवीर्यप्रतिभातुष्टिपुष्टिबलप्रदम् ॥ १८८ ॥
सात्त्विकैर्विधिवद्युक्त्या पीतं स्यादमृतं यथा ।
वर्गोऽयं सप्तमो मद्यमधिकृत्य प्रकीर्तितः ॥ १८९ ॥

इति मद्यवर्गः ।

अथ जलवर्गः ।

जलमेकविधं सर्वं पतत्यैन्द्रं नभस्तलात् ।
तत्पतत्पतितं चैव देशकालावपेक्षते ॥ १९० ॥
खात्पतत्सोमवाय्वर्कैः स्पृष्टं कालानुवर्तिभिः ।
शीतोष्णस्निग्धरूक्षाद्यैर्यथासन्नं महीगुणैः ॥ १९१ ॥
शीतं शुचि शिवं मृष्टं विमलं लघु षड्गुणम् ।
प्रकृत्या दिव्यमुदकं भ्रष्टं पात्रमपेक्षते ॥ १९२ ॥
श्वेते कषायं भवति पाण्डरे चैव तिक्तकम् ।
कपिले कटुकं तोयमूषरे लवणान्वितम् ।
कटु पर्वतविस्रावे मधुरं कृष्णमृत्तिके ॥ १९३ ॥
एतत्षाड्गुण्यमाख्यातं महीस्थस्य जलस्य हि ।
तथाव्यक्तरसं विद्यादैन्द्रं कारं हिमं च तत् ॥ १९४ ॥
यदन्तरीक्षात्पततीन्द्रसृष्टं चोक्तैश्च पात्रैः परिगृह्यतेऽम्भः ।
तदैन्द्रमित्येव वदन्ति धीरा नरेन्द्रपेयं सलिलं प्रधानम् ॥ १९५ ॥
ऋतावृताविहाख्याताः सर्व एवाम्भसो गुणाः ।
ईषत्कषायमधुरं सुसूक्ष्मं विशदं लघु ॥ १९६ ॥
अरूक्षमनभिष्यन्दि सर्वं पानीयमुत्तमम् ।
गुर्वभिष्यन्दि पानीयं वार्षिकं मधुरं लघु ॥ १९७ ॥
तनु लघ्वनभिष्यन्दि प्रायः शरदि वर्षति ।
तत्तु ये सुकुमाराः स्युः स्निग्धभूयिष्ठभोजिनः ॥ १९८ ॥

तेषां भक्ष्ये च भोज्ये च लेह्ये पेये च शस्यते ।
हेमन्ते सलिलं स्निग्धं वृष्यं बल्यं हितं गुरु ॥ १९९ ॥
किंचित्ततो लघुतरं शिशिरे कफवातजित् ।
कषायमधुरं रूक्षं विद्याद्वासन्तिकं जलम् ।
ग्रैष्मिकं त्वनभिष्यन्दि जलमित्येव निश्चयम् ॥ २०० ॥
विभ्रान्तेष्वृतुकालेषु यत्प्रयच्छन्ति तोयदाः ।
सलिलं तत्तु दोषाय युज्यते नात्र संशयः ॥ २०१ ॥
राजभी राजमात्रैश्च सुकुमारैश्च मानवैः ।
संगृहीताः शरद्यापः प्रयोक्तव्या विशेषतः ॥ २०२ ॥
नद्यः पाषाणविच्छिन्नविक्षुब्धा विमलोदकाः ।
हिमवत्प्रभवाः पथ्याः पुण्या देवर्षिसेविताः ॥ २०३ ॥
नद्यः पाषाणसिकतावाहिन्यो विमलोदकाः ।
मलयप्रभवा याश्च जलं तास्वमृतोपमम् ॥ २०४ ॥
पश्चिमाभिमुखा याश्च पथ्यास्ता निर्मलोदकाः ।
प्रायो मृदुवहा गुर्व्यो याश्च पूर्वसमुद्रगाः ॥ २०५ ॥
पारियात्रभवा याश्च विन्ध्यसह्यभवाश्च याः ।
शिरोहृद्रोगकुष्ठानां ता हेतुः श्लीपदस्य च ॥ २०६ ॥
वसुधाकीटसर्पाखुमलसंदूषितोदकाः ।
वर्षाजलवहा नद्यः सर्वदोषसमीरणाः ॥ २०७ ॥
वापीकूपतडागोत्ससरःप्रस्रवणादिषु ।
आनूपशैलधन्वानां गुणदोषैर्विभावयेत् ॥ २०८ ॥
पिच्छिलं क्रिमिलं क्लिन्नं पर्णशैवालकर्दमैः ।
विवर्णं विरसं सान्द्रं दुर्गन्धि न हितं जलम् ॥ २०९ ॥
विस्रं त्रिदोषं लवणमम्बु यद्वरुणालयम् ।
इत्यम्बुवर्गः प्रोक्तोऽयमष्टमः सुविनिश्चितः ॥ २१० ॥

इति अम्बुवर्गः ।

अथ दुग्धवर्गः ।

स्वादु शीतं मृदु स्निग्धं बहलं श्लक्ष्णपिच्छिलम् ।
गुरु मन्दं प्रसन्नं च गव्यं दशगुणं पयः ॥ २११ ॥

तदेवंगुणमेवौजःसामान्यादभिवर्धयेत् ।
प्रवरं जीवनीयानां क्षीरमुक्तं रसायनम् ॥ २१२ ॥
महिषीणां गुरुतरं गव्याच्छीततरं पयः ।
स्नेहन्यूनमनिद्राय हितमत्यग्नये च तत् ॥ २१३ ॥
रूक्षोष्णं क्षीरमुष्ट्रीणामीषत्सलवणं लघु ।
शस्तं वातकफानाहक्रिमिशोफोदरार्शसाम् ॥ २१४ ॥
बल्यं स्थैर्यकरं सर्वमुष्णं चैकशफं पयः ।
साम्लं सलवणं रूक्षं शाखावातहरं लघु ॥ २१५ ॥
छागं कषायमधुरं शीतं ग्राहि पयो लघु ।
रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम् ॥ २१६ ॥
हिक्काश्वासकरं तूष्णं पित्तश्लेष्मलमाविकम् ।
हस्तिनीनां पयो बल्यं गुरु स्थैर्यकरं परम् ॥ २१७ ॥
जीवनं बृंहणं सात्म्यं स्नेहनं मानुषं पयः ।
लवणं रक्तपित्ते च तर्पणं चाक्षिशूलिनाम् ॥ २१८ ॥
रोचनं दीपनं वृष्यं स्नेहनं बलवर्धनम् ।
पाकेऽम्लमुष्णं वातघ्नं मङ्गलं बृंहणं दधि ॥ २१९ ॥
पीनसे चातिसारे च शीतके विषमज्वरे ।
अरुचौ मूत्रकृच्छ्रे च कार्श्ये च दधि शस्यते ॥ २२० ॥
शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम् ।
रक्तपित्तकफोत्थेषु विकारेष्वहितं च तत् ॥ २२१ ॥
त्रिदोषं मन्दकं जातं वातघ्नं दधि शुक्रलम् ।
सरः श्लेष्मानिलघ्नस्तु मण्डः स्रोतोविशोधनः ॥ २२२ ॥
शोफार्शोग्रहणीदोषमूत्रकृच्छ्रोदरारुचि ।
स्नेहव्यापदि पाण्डुत्वे तक्रं दद्याद्गरेषु च ॥ २२३ ॥
संग्राहि दीपनं हृद्यं नवनीतं नवोद्धृतम् ।
ग्रहण्यर्शोविकारघ्नमर्दितारुचिनाशनम् ॥ २२४ ॥
स्मृतिबुद्ध्यग्निशुक्रौजःकफमेदोविवर्धनम् ।
वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहम् ॥ २२५ ॥
सर्वस्नेहोत्तमं शीतं मधुरं रसपाकयोः ।

सहस्रवीर्यं विधिभिर्घृतं कर्मसहस्रकृत् ॥ २२६ ॥
मदापस्मारमूर्च्छायशोषोन्मादगरज्वरान् ।
योनिकर्णशिरःशूलं घृतं जीर्णमपोहति ॥ २२७ ॥
सर्पींष्यजाविमहिषीक्षीरवत्स्वानि निर्दिशेत् ।
पीयूषो मोरटं चैव किलाटा विविधाश्च ये ॥ २२८ ॥
दीप्ताग्नीनामनिद्राणां सर्व एते सुखप्रदाः ।
गुरवस्तर्पणा वृष्या बृंहणाः पवनापहाः ॥ २२९ ॥
विशदा गुरवो रूक्षा ग्राहिणस्तक्रपिण्डकाः ।
गोरसानामयं वर्गो नवमः परिकीर्तितः ॥ २३० ॥

इति गोरसवर्गः ।

अथेक्षुवर्गः ।

वृष्यः शीतः स्थिरः स्निग्धो बृंहणो मधुरो रसः ।
श्लेष्मलो भक्षितस्येक्षोर्यान्त्रिकस्तु विदह्यते ॥ २३१ ॥
शैत्यात्प्रसादान्माधुर्यात्पौण्ड्रकाद्वंशको वरः ।
प्रभूतकृमिमज्जासृङ्मेदोमांसकरो गुडः ॥ २३२ ॥
क्षुद्रो गुडश्चतुर्भागस्त्रिभागार्धावशेषितः ।
रसो गुरुर्यथा पूर्वं धौतं स्वल्पमलो गुडः ॥ २३३ ॥
ततो मत्स्यण्डिकाखण्डशर्करा विमलाः परम् ।
यथा यथैषां वैमल्यं भवेच्छैत्यं तथा तथा ॥ २३४ ॥
वृष्याः क्षीणक्षतहिताः सस्नेहा गुडशर्कराः ॥
कषायमधुराः शीताः सतिक्ता या सशर्करा ॥ २३५ ॥
रूक्षा वम्यतिसारघ्नी च्छेदनी मधुशर्करा ।
तृष्णासृक्पित्तदाहेषु प्रशस्ताः सर्वशर्कराः ॥ २३६ ॥
माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं मधुजातयः ।
माक्षिकं प्रवरं तेषां विशेषाद्भ्रामरं गुरु ॥ २३७ ॥
माक्षिकं तैलवर्णं स्याच्छ्वेतं भ्रामरमुच्यते ।
क्षौद्रं तु कपिलं विद्याद्घृतवर्णं तु पौत्तिकम् ॥ २३८ ॥
वातलं गुरु शीतं च रक्तपित्तकफापहम् ।
संधातृच्छेदनं रूक्षं कषायमधुरं मधु ॥ २३९ ॥

हन्यान्मधूष्णमुष्णार्तमथवा सविषान्वयात् ।
गुरुरूक्षकषायत्वाच्छैत्याच्चाल्पं हितं मधु ॥ २४० ॥
नातः कष्टतमं किंचिन्मध्वामात्तद्धि माधवम् ।
उपक्रमविरोधित्वात्सद्यो हन्याद्यथा विषम् ॥ २४१ ॥
आमे सोष्णा क्रिया कार्या सा मध्वामे विरुध्यते ।
मध्वामं दारुणं तस्मात्सद्यो हन्याद्यथा विषम् ॥ २४२ ॥
नानाद्रव्यात्मकत्वाच्च योगवाहि हिमं मधु ।
इतीक्षुविकृतिप्रायो वर्गोऽयं दशमो मतः ॥ २४३ ॥

इति इक्षुवर्गः ।

अथ कृतान्नवर्गः ।

क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगविनाशिनी ।
स्वेदाग्निजननी पेया वातवर्चोऽनुलोमनी ॥ २४४ ॥
तर्पणी ग्राहिणी लघ्वी हृद्या चापि विलेपिका ।
शृतः पिप्पलिशुण्ठीभ्यां युक्तो लाजाम्लदाडिमैः ॥ २४५ ॥
मण्डस्तु दीपयत्यग्निं वातं चाप्यनुलोमयेत् ।
मृदूकरोति स्रोतांसि स्वेदं संजनयत्यपि ॥ २४६ ॥
लङ्घितानां विरिक्तानां जीर्णे स्नेहे च तृष्यताम् ।
दीपनत्वाल्लघुत्वाच्च मण्डः स्यात्प्राणधारणः ॥ २४७ ॥
तृष्णातीसारशमनो धातुसाम्यकरः शिवः ।
लाजमण्डोऽग्निजननो दाहमूर्च्छानिवारणः ॥ २४८ ॥
मन्दाग्निविषमाग्नीनां बालस्थविरयोषिताम् ।
देयश्च सुकुमाराणां लाजमण्डः सुसंस्कृतः ॥ २४९ ॥
क्षुत्पिपासासहः पथ्यः शुद्धानां तु मलापहः ।
सुधौतः प्रस्नुतः स्विन्नः संतप्तश्चौदनो लघुः ॥ २५० ॥
भृष्टतण्डुलमिच्छन्ति गरश्लेष्मामयेष्वपि ।
अधौतः प्रस्नुतः स्विन्नः शीतश्चाप्योदनो गुरुः ॥ २५१ ॥
मांसशाकवसातैलघृतमज्जफलौदनाः ।
बल्याः संतर्पणा हृद्या गुरवो बृंहयन्ति च ॥ २५२ ॥
तद्वन्माषतिलक्षीरमुद्गसंयोगसाधिताः ।

कुल्माषा गुरवो रूक्षा वातला भिन्नवर्चसः ॥ २५३ ॥
स्विन्नभक्ष्यास्तु ये केचित्सौप्यगोधूमयावकाः ।
भिषक्तेषां यथाद्रव्यमादिशेद्गुरुलाघवम् ॥ २५४ ॥
अकृतं कृतयूषं च तनु संस्कारितं रसम् ।
सूपमम्लमनम्लं च गुरुं विद्याद्यथोत्तरम् ॥ २५५ ॥
शक्तवो वातला रूक्षा बहुवर्चोऽनुलोमिनः ।
तर्पयन्ति नरं सद्यः पीता सद्योबलाश्च ते ॥ २५६ ॥
मधुरा लघवः शीताः सक्तवः शालिसंभवाः ।
ग्राहिणो रक्तपित्तघ्नास्तृषाच्छर्दिज्वरापहाः ॥ २५७ ॥
हन्याद्व्याधीन्यवापूपो यावको वाट्य एव च ।
उदावर्तप्रतिश्यायकासमेहगलग्रहान् ॥ २५८ ॥
धानासंज्ञास्तु ये भक्ष्याः प्रायस्ते लेखनात्मकाः ।
शुष्कत्वात्तर्पणाश्चैव विष्टम्भित्वाच्च दुर्जराः ॥ २५९ ॥
विरूढधानाः शष्कुल्यो मधुक्रोडाः सपिण्डकाः ।
सूपाः पूपुलिकाद्याश्च गुरवः पैष्टिकाः परम् ॥ २६० ॥
फलमांसवसाशाकपललक्षौद्रसंस्कृताः ।
भक्ष्या वृष्याश्च बल्याश्च गुरवो बृंहणात्मकाः ॥ २६१ ॥
वेशवारो गुरुः स्निग्धो बलोपचयवर्धनः ।
गुरवस्तर्पणा वृष्याः क्षीरेक्षुरससूपकाः ॥ २६२ ॥
सगुडाः सतिलाश्चैव सक्षीरक्षौद्रशर्कराः ।
वृष्या बल्याश्च भक्ष्यास्तु ते परं गुरवः स्मृताः ॥ २६३ ॥
सस्नेहाः स्नेहसिद्धाश्च भक्ष्या विविधलक्षणाः ।
गुरवस्तर्पणा वृष्या हृद्या गोधूमिका मताः ॥ २६४ ॥
संस्काराल्लघवः सन्ति भक्ष्या गोधूमपैष्टिकाः ।
धाना पर्पटपूपाद्यास्तान्बुद्ध्वा निर्दिशेत्तथा ॥ २६५ ॥
पृथुका गुरवो भृष्टान्भक्षयेदल्पशस्तु तान् ।
यावा विष्टभ्य जीर्यन्ति सतुषा भिन्नवर्चसः ॥ २६६ ॥
सूप्यान्नविकृता भक्ष्या वातला रूक्षशीतलाः ।
सकटुस्नेहलवणानल्पशो भक्षयेत्तु तान् ॥ २६७ ॥

मृदुपाकाश्च ये भक्ष्याः स्थूलाश्च कठिनाश्च ये ।
गुरवस्तेऽप्यतिक्रान्तपाकाः पुष्टिबलप्रदाः ॥ २६८ ॥
द्रव्यसंयोगसंस्कारं द्रव्यमानं पृथक्तथा ।
भक्ष्याणामादिशेद्बुद्ध्वा यथास्वं गुरुलाघवम् ॥ २६९ ॥
रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा ।
स्नेहनं तर्पणं हृद्यं वातघ्नं सगुडं दधि ॥ २७० ॥
द्राक्षाखर्जूरकोलानां गुरु विष्टम्भि पानकम् ।
परूपकाणां क्षौद्रस्य यच्चेक्षुविकृतिं प्रति ॥ २७१ ॥
तेषां कट्वम्लसंयोगाः पानकानां पृथक्पृथक् ।
द्रव्यमानं च विज्ञाय गुणकर्माणि चादिशेत् ॥ २७२ ॥
कट्वम्लस्वादुलवणा लघवो रागषाण्डवाः ।
मुखप्रियाश्च हृद्याश्च दीपना भक्तरोचनाः २७३ ॥
आम्रामलकलेहाश्च बृंहणा बलवर्धनाः ।
रोचनास्तर्पणाश्चोक्ताः स्नेहमाधुर्यगौरवात् ॥ २७४ ॥
बुद्ध्वा संयोगसंस्कारं द्रव्यमानं च तत्स्मृतम् ।
गुणकर्माणि लेहानां तेषां तेषां तथा वदेत् ॥ २७५ ॥
रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम् ।
कन्दमूलफलाद्यं च तद्वद्विद्यात्तदासुतम् ॥ २७६ ॥
शिण्डाकी चासुतं चान्यत्कालाम्लं रोचनं लघु ।
विद्याद्वर्गं कृतान्नानामेकादशतमं भिषक् ॥ २७७ ॥

इति कृतान्नवर्गः ।

अथाहारयोगवर्गः ।

कषायानुरसं स्वादु सूक्ष्ममुष्णं व्यवायि च ।
पित्तलं बद्धविण्मूत्रं न च श्लेष्माभिवर्धनम् ॥ २७८ ॥
वातघ्नेषूत्तमं बल्यं त्वच्यं मेधाग्निवर्धनम् ।
तैलं संयोगसंस्कारात्सर्वरोगापहं मतम् ॥ २७९ ॥
तैलप्रयोगादजरा निर्विकारा जितश्रमाः ।
आसन्नातिबलाः संख्ये दैत्याधिपतयः पुरा ॥ २८० ॥
ऐरण्डतैलं मधुरं गुरु श्लेष्माभिवर्धनम् ।

वातासृग्गुल्महृद्रोगजीर्णज्वरहरं परम् ॥ २८१ ॥
कटूष्णं सार्षपं तैलं रक्तपित्तप्रदूषणम् ।
कफशुक्रानिलहरं कण्डूकोठविनाशनम् ॥ २८२ ॥
पियालतैलं मधुरं गुरु श्लेष्माभिवर्धनम् ।
हितमिच्छन्ति नात्यौष्ण्यात्संयोगे वातपित्तयोः ॥ २८३ ॥
आतस्यं मधुराम्लं तु विपाके कटुकं तथा ।
उष्णवीर्यं हितं वाते रक्तपित्तप्रकोपनम् ॥ २८४ ॥
कुसुम्भतैलमुष्णं च विपाके कटुकं गुरु ।
विदाहि च विशेषेण सर्वरोगप्रकोपनम् ॥ २८५ ॥
फलानां यानि चान्यानि तैलान्याहारसंनिधौ ।
युज्यन्ते गुणकर्मभ्यां तानि ब्रूयाद्यथायथम् ॥ २८६ ॥
मधुरो बृंहणो वृष्यो बल्यो मज्जा तथा वसा ।
यथासत्त्वं तु शैत्योष्णे वसामज्ज्ञोर्विनिर्दिशेत् ॥ २८७ ॥
सस्नेहं दीपनं वृष्यमुष्णं वातकफापहम् ।
विपाकमधुरं हृद्यं रोचनं विश्वभेषजम् ॥ २८८ ॥
श्लेष्मला मधुरा चार्द्रा गुर्वी स्निग्धा च पिप्पली ।
सा शुष्का कफवातघ्नी कटुका वृष्यसंमता ॥ २८९ ॥
नात्यर्थमुष्णं मरिचमवृष्यं लघु रोचनम् ।
छेदित्वाच्छोषणत्वाच्च दीपनं कफवातजित् ॥ २९० ॥
वातश्लेष्मविबन्धघ्नं कटुकं दीपनं लघु ।
हिङ्गु शूलप्रशमनं विद्यात्पाचनरोचनम् ॥ २९१ ॥
रोचनं दीपनं हृद्यं चक्षुष्यमविदाहि च ।
त्रिदोषघ्नं समधुरं सैन्धवं लवणोत्तमम् ॥ २९२ ॥
सौक्ष्म्यादौष्ण्याल्लघुत्वाच्च सौगन्ध्याच्च रुचिप्रदम् ।
सौवर्चलं विबन्धघ्नं हृद्यमुद्गारशोधि च ॥ २९३ ॥
तैक्ष्ण्यादौष्ण्याद्व्यवायित्वाद्दीपनं शूलनाशनम् ।
ऊर्ध्वं चाधश्च वातानामानुलोम्यकरं बिडम् ॥ २९४ ॥
सतिक्तकटु सक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम् ।
न काललवणे गन्धः सौवर्चलगुणाश्च ते ॥ २९५ ॥

सामुद्रकं समधुरं सतिक्तं कटुपांशुजम् ।
रोचनं लवणं सर्वं पाकि स्रंस्यनिलापहम् ॥ २९६ ॥
हृत्पाण्डुग्रहणीदोषप्लीहानाहगलग्रहान् ।
कासं कफजमर्शांसि यावशूको व्यपोहति ॥ २९७ ॥
तीक्ष्णोष्णो लघुरूक्षश्च क्लेदी पाकी विदारणः ।
दहनो दीपनश्छेत्ता सर्वः क्षारोऽग्निसंनिभः ॥ २९८ ॥
कारव्यः कुञ्चिकाजाजी कवरी धान्यतुम्बुरुः ।
रोचनं दीपनं वातकफदौर्गन्ध्यनाशनम् ॥ २९९ ॥
आहारयोगिनां भक्तिनिश्चयो न तु विद्यते ।
समाप्तो द्वादशश्चायं वर्ग आहारयोगिनाम् ॥ ३०० ॥

इत्याहारयोगवर्गः ।

शूकधान्यं शमीधान्यं समातीतं प्रशस्यते ।
पुराणं प्रायशो रूक्षं प्रायेणाभिनवं गुरु ॥ ३०१ ॥
यद्यदागच्छति क्षिप्रं तत्तल्लघुतरं स्मृतम् ।
निस्तुषं युक्तिभृष्टं तु सूप्यं लघु विपच्यते ॥ ३०२ ॥
मृतं केशातिमेध्यं च वृद्धं बालं विषैर्हतम् ।
अगोचरभृतं व्याडसूदितं मांसमुत्सृजेत् ॥ ३०३ ॥
अतोऽन्यथा हितं मांसं बृंहणं बलवर्धनम् ।
प्रीणनः सर्वभूतानां हृद्यो मांसरसः परम् ॥ ३०४ ॥
शुष्यतां व्याधियुक्तानां कृशानां क्षीणरेतसाम् ।
बलवर्णार्थिनां चैव रसं विद्याद्यथामृतम् ॥ ३०५ ॥
सर्वरोगप्रशमनं यथास्वं विहितं रसम् ।
विद्यात्स्वर्यं बलकरं वयोबुद्धीन्द्रियायुषाम् ॥ ३०६ ॥
व्यायामनित्याः स्त्रीनित्या मद्यनित्याश्च ये नराः ।
नित्यं मांसरसाहारा नातुराः स्युर्न दुर्बलाः ॥ ३०७ ॥
कृमिवातातपहतं शुष्कं जीर्णमनार्तवम् ।
शाकं निःस्नेहसिद्धं च वर्ज्यं यच्चापरिस्रुतम् ॥ ३०८ ॥
पुराणमामं संक्लिष्टं कृमिव्यालहिमातपैः ।
अदेशाकालजं क्लिन्नं यत्स्यात्फलमसाधु तत् ॥ ३०९ ॥

हरितानां यथा शाकं निर्देशं साधनादृते ।
मद्याम्बुगोरसादीनां स्वे स्वे वर्गे विनिश्चयः ॥ ३१० ॥
यदाहारगुणैः पानं विपरीतं तदिष्यते ।
अन्नानुपानं धातूनां दृष्टं यन्न विरोधि च ॥ ३११ ॥
आसवानां समुद्दिष्टा अशीतिश्चतुरुत्तराः ।
जलं पेयमपेयं च परीक्ष्यानुपिबेद्धितम् ॥ ३१२ ॥
स्निग्धोष्णं मारुते शस्तं पित्ते मधुरशीतलम् ।
कफेऽनुपानं रूक्षोष्णं क्षये मांसरसः परम् ॥ ३१३ ॥
उपवासाध्वभाष्यस्त्रीमारुतातपकर्मभिः ।
क्लान्तानामनुपानार्थं पयः पथ्यं यथामृतम् ॥ ३१४ ॥
सुरा कृशानां पुष्ट्यर्थमनुपानं प्रशस्यते ।
कार्श्यार्थं स्थूलदेहानामनुशस्तं मधूदकम् ॥ ३१५ ॥
अल्पाग्नीनामनिद्राणां तन्द्राशोकभयक्लमैः ।
मद्यमांसोचितानां च मद्यमेवानुशस्यते ॥ ३१६ ॥

अथानुपानकर्म प्रवक्ष्यामि । अनुपानं तर्पयति प्रीणयति ऊर्जयति पर्याप्तिमभिनिर्वर्तयति भुक्तमवसादयति अन्नसङ्घातं भिनत्ति मार्दवमापादयति क्लेदयति जरयति सुखपरिणामितामाशुव्यवायितां चाहारस्योपजनयतीति ॥ ३१७ ॥

तत्र श्लोकाः ।

अनुपानं हितं युक्तं तर्पयत्याशु मानवम् ।
सुखं पचति चाहारमायुषे च बलाय च ॥ ३१८ ॥
नोर्ध्वाङ्गमारुताविष्टा न हिक्काश्वासकासिनः ।
न गीतभाषाध्ययनप्रसक्ता नोरसि क्षताः ॥ ३१९ ॥
पिबेयुरुदकं भुक्त्वा तद्धि कण्ठोरसि स्थितम् ।
स्नेहमाहारजं हत्वा भूयो दोषाय कल्पते ॥ ३२० ॥
अनुपानैकदेशोऽयमुक्तः प्रायोपयोगिकः ।
द्रव्यं तु न हि निर्देष्टुं शक्यं कृत्स्नेन नामभिः ॥ ३२१ ॥
यथानामौषधं किंचिद्देशजानां वचो यथा ।
द्रव्यं तत्तत्तथा वाच्यमनुक्तमिह तद्भवेत् ॥ ३२२ ॥

चराः शरीरावयवाः स्वभावो धातवः क्रिया ।
लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन्परीक्ष्यते ॥ ३२३ ॥
चरोऽनूपजलाकाशधन्वाद्यो भक्ष्यसंविधौ ।
जलजानूपजाश्चैव जलानूपचराश्च ये ॥ ३२४ ॥
गुरुभक्ष्याश्च ये सत्त्वाः सर्वे ते गुरवः स्मृताः ।
लघुभक्ष्यास्तु लघवो धन्वजा धन्वचारिणः ॥ ३२५ ॥
शरीरावयवाः सक्थिशिरःस्कन्धादयस्तथा ।
सक्थिमांसाद्गुरुः स्कन्धस्ततः क्रोडस्ततः शिरः ॥ ३२६ ॥
वृषणौ चर्म मेढ्रश्च श्रोणी वृक्कौ यकृद्गुदम् ।
मांसाद्गुरुतरं विद्याद्यथास्वं मध्यमस्थि च ॥ ३२७ ॥
स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः ।
स्वभावाद्गुरवो माषा वराहमहिषास्तथा ॥ ३२८ ॥
धातूनां शोणिताद्यानां गुरुं विद्याद्यथोत्तरम् ।
अलसेभ्यो विशिष्यन्ते प्राणिनो ये बहुक्रियाः ॥ ३२९ ॥
गौरवे लिङ्गसामान्ये पुंसां स्त्रीणां च लाघवम् ।
महाप्रमाणा गुरवः स्वजातौ लघवोऽन्यथा ॥ ३३० ॥
गुरूणां लाघवं विद्यात्संस्कारात्सविपर्ययम् ।
व्रीहेर्लाजा यथा च स्युः सक्तूनां सिद्धपिण्डकाः ॥ ३३१ ॥
अल्पादाने गुरूणां च लघूनां चातिसेवने ।
मात्राकारणमुद्दिष्टं द्रव्याणां गुरुलाघवे ॥ ३३२ ॥
गुरूणामल्पमादेयं लघूनां तृप्तिरिष्यते ।
मात्रामपेक्षते द्रव्यं मात्रा चाग्निमपेक्षते ॥ ३३३ ॥
बलमारोग्यमायुश्च प्राणाश्चाग्नौ प्रतिष्ठिताः ।
अनुपानेन्धनैश्चाग्निर्दीप्यते शाम्यतेऽन्यथा ॥ ३३४ ॥
गुरुलाघवचिन्तेयं प्रायेणाल्पबलान्प्रति ।
मन्दकर्मानना रोग्यान् सुकुमारान्सुखोचितान् ॥ ३३५ ॥
दीप्ताग्नयः खराहाराः कर्मनित्या महोदराः ।
ये नराः प्रति तांश्चिन्त्यं नावश्यं गुरुलाघवम् ॥ ३३६ ॥
हिताभिर्जुहुयान्नित्यमन्तराग्निं समाहितः ।

अनुपानसमिद्धिर्ना मात्राकालौ विचारयन् ॥ २३७ ॥
आहिताग्निः सदा पथ्यान्यन्तराग्नौ जुहोति यः ।
दिवसे दिवसे ब्रह्म जपत्यथ ददाति च ।
नरं निःश्रेयसे युक्तं सात्म्यज्ञं पानभोजने ॥ २३८ ॥
भजन्ते नामयाः केचिद्भाविनोऽप्यन्तरादृते ।
षट्त्रिंशच्च सहस्राणि रात्रीणां हितभोजनः ॥ २३९ ॥
जीवत्यनातुरो जन्तुर्जितात्मा संमतः सतामिति ।"

तत्र श्लोकाः ।

अनुपानगुणाः साग्र्या वर्गा द्वादश निश्चिताः ।
सगुणान्यन्नपानानि गुरुलाघवसंग्रहः ॥ २४० ॥
अनुपानविधावुक्तं तत्परीक्ष्यं विशेषतः ।
प्राणाः प्राणभृतामन्नमन्नं लोकोऽभिधावति ॥ २४१ ॥
वर्णप्रसादः सौस्वर्यं जीवितं प्रतिभा सुखम् ।
तुष्टिः पुष्टिर्बलं मेधा सर्वमन्ने प्रतिष्ठितम् ॥ ३४२ ॥
लौकिकं कर्म यद्वृत्तौ स्वर्गतौ यच्च वैदिकम् ।
कर्मापवर्गे यच्चोक्तं तच्चाप्यन्ने प्रतिष्ठितम् ॥ २४३ ॥

इत्यन्नपानचतुष्केऽन्नपानविधिरध्यायः ।

---

## अष्टाविंशोऽध्यायः ।

### अथातो विविधाशितपीतीयमध्यायं व्याख्यास्यामः ।
### इति ह स्माह भगवानात्रेयः ।

"विविधमशितपीतलीढखादितं जन्तोर्हितमन्नमग्निसन्धुक्षितबलेन यथास्वेनोष्मणा सम्यग्विपच्यमानं कालवदनवस्थितसर्वधातुपाकमनुपहतसर्वधातूष्ममारुतस्रोतः केवलं शरीरमुपचयबलवर्णसुखायुषा योजयतीति शरीरधातूनूर्जयन् धातवो हि धात्वाहाराः प्रकृतिमनुवर्तन्ते ॥ १ ॥

तत्राहारप्रसादाख्यो रसः किट्टं च मलाख्यमभिनिर्वर्तते किट्टात् मूत्रस्वेदपुरीषवातपित्तश्लेष्माणः कर्णाक्षिनासिकास्यलोमकूपप्रजननमलकेशश्मश्रुलोमनखादयश्चावयवाः ॥ २ ॥

पुष्यन्ति त्वाहाररसात् रसरुधिरमांसमेदोऽस्थिमज्जशुक्रौजांसि पञ्चेन्द्रियद्रव्याणि धातुप्रसादसंज्ञकानि शरीरसन्धिबन्धपिच्छादयश्चावयवाः ते सर्व एव धातवो मलाख्याः प्रसादाख्याश्च रसमलाभ्यां पुष्यन्तः स्वं मानमनुवर्तन्ते यथा वयःशरीरम् ॥ ३ ॥

एवं रसमलौ स्वप्रमाणावस्थितौ आश्रयस्य समधातोर्धातुसाम्यमनुवर्तयतो निमित्ततस्तु क्षीणातिवृद्धानां प्रसादाख्यानां धातूनां वृद्धिक्षयाभ्यामाहारमूलाभ्यां रसः साम्यमुत्पादयते आरोग्याय ॥४॥

किट्टं च मलानामेवमेव। स्वमानातिरिक्ताः पुनरुत्सर्गिणः शीतोष्णपर्यायगुणैश्चोपचर्यमाणा मलाः शरीरधातुसाम्यकराः समुपलभ्यन्ते ॥ ५ ॥

तेषां तु मलप्रसादाख्यानां धातूनां स्रोतांस्ययनमुखानि तानि यथाविभागेन यथास्वं धातुना पूरयन्त्येवमिदं शरीरमशितपीतलीढखादितप्रभवम्। अशितलीढखादितप्रभवाश्चास्मिन् शरीरे व्याधयो भवन्ति ॥ ६ ॥

हिताहितोपयोगविशेषास्त्वत्र शुभाशुभविशेषकरा भवन्ति इति ॥ ७ ॥

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच। दृश्यन्ते हि भगवन् हितसमाख्यातमप्याहारमुपयुञ्जाना व्याधिमन्तश्चागदाश्च तथैवाहितसमाख्यातमेवं दृष्टे कथं हिताहितोपयोगविशेषात्मकं शुभाशुभविशेषमुपलभेमहीति ॥ ८ ॥

तमुवाच भगवानात्रेयः। न हिताहारोपयोगिनामग्निवेश तन्निमित्ता व्याधयो जायन्ते। न च केवलं हिताहारोपयोगादेव सर्वं व्याधिभयमतिक्रान्तं भवति। सन्ति हि ऋतेऽपि हिताहारोपयोगादन्या रोगप्रकृतयः। तद्यथा।—

कालविपर्ययः प्रज्ञापराधः परिणामश्च शब्दस्पर्शरूपरसगन्धाश्चासात्म्या इति। ताश्च रोगप्रकृतयो रसान् सम्यगुपयुञ्जानं पुरुषमशुभेनोपपादयन्ति। तस्माद्धिताहारोपयोगिनोऽपि दृश्यन्ते व्याधिमन्तः। अहिताहारोपयोगिनां पुनः कारणतो न सद्यो दोषवान्

भवत्यपचारो न हि सर्वाण्यपथ्यानि तुल्यदोषकराणि। न च सर्वे दोषास्तुल्यबलाः। न च सर्वाणि शरीराणि व्याधिक्षमत्वे समर्थानि। तदेव ह्यपथ्यं देशकालसंयोगवीर्यप्रमाणातियोगाद्भूयस्तरमपथ्यं संपद्यते। स एव दोषः संसृष्टयोनिविरुद्धोपक्रमो गम्भीरानुगतः प्राणायतनसमुत्थो मर्मोपघाती वा भूयान् कष्टतमः क्षिप्रकारितमं च संपद्यते॥ ९॥

शरीराणि चातिस्थूलानि अतिकृशानि अनिविष्टमांसशोणितास्थीनि दुर्बलानि असात्म्याहारोपचितान्यल्पाहाराणि अल्पसत्त्वानि वा भवन्ति अव्याधिसहानि॥ १०॥

विपरीतानि पुनर्व्याधिसहानि एभ्यश्चैवापथ्याहारदोषशरीरविशेषेभ्यो व्याधयो मृदवो दारुणाः क्षिप्रसमुत्थाश्चिरकारिणश्च भवन्ति॥ ११॥

अतएव च वातपित्तश्लेष्माणः स्थानविशेषे प्रकुपिता व्याधिविशेषानभिनिर्वर्तयन्ति अग्निवेश तत्र रसादिषु स्थानेषु प्रकुपितानां दोषाणां यस्मिन् यस्मिन् स्थाने ये ये व्याधयः संभवन्ति तांस्तान् यथावदनुव्याख्यास्यामः॥ १२॥

अश्रद्धा चारुचिश्चास्यवैरस्यमरसंज्ञता।
हृल्लासो गौरवं तन्द्रा साङ्गमर्दो ज्वरस्तमः॥ १३॥
पाण्डुत्वं स्रोतसां रोधः क्लैब्यं सादः कृशाङ्गता।
नाशोऽग्नेरयथाकालं वलयः पलितानि च।
रसप्रदोषजा रोगा वक्ष्यन्ते रक्तदोषजाः॥ १४॥
कुष्ठवीसर्पपिडका रक्तपित्तमसृग्दरः।
गुदमेढ्रास्यपाकश्च प्लीहा गुल्मोऽथ विद्रधी॥ १५॥
नीलिका कामला व्यङ्गं पिप्लवस्तिलकालकाः।
दद्रुश्चर्मदलं श्वित्रः पामा कोठास्त्रमण्डलम्।
रक्तप्रदोषाज्जायन्ते शृणु मांसप्रदोषजान्॥ १६॥
अधिमांसार्बुदं कीलगलशालूकशुण्डिकाः।
पूतिमांसालजीगण्डगण्डमालोपजिह्विकाः॥ १७॥
विद्यान्मांसाश्रयान्मेदःसंश्रयांस्तु प्रवक्ष्यते।

वहन्ति यच्चावहन्ति यत्र चावस्थितानि सर्वं तदन्यत्तेभ्यः ॥ १ ॥

अतिबहुत्वात्तु खलु केचिदपरिसंख्येयान्याचक्षते स्रोतांसि, परिसंख्येयानि पुनरन्ये, तेषां स्रोतसां यथास्थानं कतिचित्प्रकारान्मूलतश्च प्रकोपविज्ञानतश्चानुव्याख्यास्यामः, ये भविष्यन्त्यलमनुक्तार्थज्ञानवते विज्ञानाय चाज्ञानाय, तद्यथा, प्राणोदकान्नरसरुधिरमांसमेदोऽस्थिमज्जशुक्रमूत्रपुरीषस्वेदवहानि वातपित्तश्लेष्मणां पुनः सर्वशरीरचराणां सर्वस्रोतांसि अयनभूतानि ॥ २ ॥

तद्वदतीन्द्रियाणां पुनः सत्त्वादीनां केवलं चेतनावच्छरीरमयनभूतमधिष्ठानभूतं च, तदेतत्स्रोतसां प्रकृतिभूतत्वान्न विकारैरुपसृज्यते शरीरम् । तत्र प्राणवहानां स्रोतसां हृदयं मूलं महास्रोतश्च, प्रदुष्टानामिदं विशेषज्ञानं भवति, अतिसृष्टकुपितं सप्रतिबन्धं अल्पाल्पमभीक्ष्णं वा सशब्दशूलमुच्छ्वसन्तं दृष्ट्वा प्राणवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात् ॥ ३ ॥

उदकवहानां स्रोतसां तालु मूलं क्लोम च, प्रदुष्टानामिदं विज्ञानं, तद्यथा जिह्वाताल्वोष्ठकण्ठक्लोमशोषं पिपासां चातिप्रवृद्धां दृष्ट्वा उदकवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात् ॥ ४ ॥

अन्नवहानां स्रोतसां आमाशयो मूलं वामं च पार्श्वम् । प्रदुष्टानां तु खल्वेषामिदं विशेषविज्ञानं भवति, तद्यथा अनन्नाभिलषणमरोचकाविपाकौ छर्दिं च दृष्ट्वा अन्नवहानि स्रोतांसि प्रदुष्टानीति विद्यात् ॥ ५ ॥

रसवहानां स्रोतसां हृदयं मूलं दश च धमन्यः, शोणितवहानां स्रोतसां यकृन्मूलं प्लीहा च, मांसवहानां च स्रोतसां स्नायु मूलं त्वक्, मज्जावहानां स्रोतसामस्थीनि मूलं सक्थयश्च, शुक्रवहाणां स्रोतसां वृषणौ मूलं शेफश्च । प्रदुष्टानां तु रसादिस्रोतसां खलु एषां विज्ञानान्युक्तानि विविधाशीतिये अध्याये यान्येव हि धातूनां प्रदोषविज्ञानानि तान्येव यथास्वं धातुस्रोतसाम् ॥ ६ ॥

मूत्रवहाणां स्रोतसां बस्तिर्मूलं वङ्क्षणौ च, खल्वेषामिदं प्रदुष्टानां विज्ञानमतिसृष्टं प्रतिबद्धं कुपितमल्पाल्पमभीक्ष्णं वा सशूलं मूत्रं मूत्रयन्तं दृष्ट्वा मूत्रवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात्॥७॥

पुरीषवहाणां स्रोतसां पक्वाशयो मूलं स्थूलगुदश्च। प्रदुष्टानां खल्वेषामिदं विज्ञानं, कृच्छ्रेण अल्पाल्पं सशूलमतिद्रवं कुपितमतिवृद्धं चोपविशन्तं दृष्ट्वा पुरीषवहाण्यस्य स्रोतांसि प्रदुष्टानीति विद्यात् ॥ ८ ॥

स्वेदवहानां स्रोतसां मेदो मूलं रोमकूपाश्च। प्रदुष्टानां खल्वेषामिदं विज्ञानं, अस्वेदनमतिस्वेदनं पारुष्यमतिश्लक्ष्णतां परिदाहं लोमहर्षं च दृष्ट्वा स्वेदवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात् ९

स्रोतांसि शिरा धमन्यो रसवाहिन्यो नाड्यः पन्थानो मार्गाः शरीरच्छिद्राणि संवृतासंवृतानि स्थानानि आशया आलयाः निकेताश्चेति शरीरधात्ववकाशानां लक्ष्यालक्ष्याणां नामानि ॥ १० ॥

तेषां प्रकोपात्स्थानस्थाश्चैव मार्गगाश्चैव शरीरधातवः प्रकोपमापद्यन्ते ॥ ११ ॥

इतरेषां वा प्रकोपादितराणि ॥ १२ ॥

स्रोतांसि स्रोतांस्येव धातवश्च धातून्प्रदूषयन्ति ॥ १३ ॥

प्रदुष्टास्त्वेषां सर्वेषामेव वातपित्तश्लेष्माणो दुष्टा दूषयितारो भवन्ति दोषस्वभावादिति ॥ १४ ॥

भवति चात्र।

क्षयात्संधारणाद्रौक्ष्याद्व्यायामात्क्षुधितस्य च।
प्राणवाहीनि दुष्यन्ति स्रोतांस्यन्यैश्च दारुणैः ॥ १५ ॥
औष्ण्यादामाद्भयात्पानादतिशुष्कान्नसेवनात्।
अम्बुवाहीनि दुष्यन्ति तृषायाश्चातिपीडनात् ॥ १६ ॥
अतिमात्रस्य चाकाले चाहितस्य च भोजनात्।
अन्नवाहीनि दुष्यन्ति वैगुण्यात्पावकस्य च ॥ १७ ॥
गुरुशीतमतिस्निग्धमतिमात्रनिषेवणात्।
रसवाहीनि दुष्यन्ति चिन्त्यानां चातिचिन्तनात् ॥ १८ ॥
विदाहीन्यन्नपानानि स्निग्धोष्णानि द्रवाणि च।
रक्तवाहीनि दुष्यन्ति भजतां चातपानलौ ॥ १९ ॥
अभिष्यन्दीनि भोज्यानि स्थूलानि च गुरूणि च।
मांसवाहीनि दुष्यन्ति भुक्त्वा च स्वपतो दिवा ॥ २० ॥

अव्यायामाद्दिवास्वप्नान्मेद्यानां चातिभक्षणात्।
मेदोवाहीनि दुष्यन्ति वारुण्याश्चातिसेवनात्॥ २१॥
व्यायामादतिसंक्षोभादस्थ्नामति च भक्षणात्।
अस्थिवाहीनि दुष्यन्ति वातलानां च सेवनात्॥ २२॥
उत्पेषादत्यभिष्यन्दादभिघातात्प्रपीडनात्।
मज्जावाहीनि दुष्यन्ति विरुद्धानां च सेवनात्॥ २३॥
अकालयोनिगमनान्निग्रहादतिमैथुनात्।
शुक्रवाहीणि दुष्यन्ति शस्त्रक्षाराग्निभिस्तथा॥ २४॥
मूत्रितोदकभक्षस्त्रीसेवनान्मूत्रनिग्रहात्।
मूत्रवाहीणि दुष्यन्ति क्षीणस्याथ कृशस्य च॥ २५॥
विधारणादत्यशनादजीर्णाध्यशनात्तथा।
वर्चों वहानि दुष्यन्ति दुर्बलाग्नेः कृशस्य च॥ २६॥
व्यायामादतिसंतापाच्छीतोष्णाक्रमसेवनात्।
स्वेदवाहीनि दुष्यन्ति क्रोधशोकभयैस्तथा॥ २७॥
आहारश्च विहारश्च यः स्याद्दोषगुणैः समः।
धातुभिर्विगुणश्चापि स्रोतसां स प्रदूषकः॥ २८॥
अतिप्रवृत्तिः सङ्गो वा शिराणां ग्रन्थयोऽपि वा।
विमार्गगमनं वापि स्रोतसां दुष्टलक्षणम्॥ २९॥
स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च।
स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च॥ ३०॥
प्राणोदकान्नवाहानां दुष्टानां श्वासिकी क्रिया।
कार्या तृष्णोपशमनी तथैवामप्रदोषिकी॥ ३१॥
विविधाशितपीतीये रसादीनां यदौषधम्।
दूषितस्रोतसां कुर्यात्तद्यथास्वमुपक्रमम्॥ ३२॥
मूत्रविट्स्वेदवाहानां चिकित्सा मौत्रकृच्छ्रिकी।
तथातिसारिकी कार्या तथा ज्वरचिकित्सिकी॥३३॥" इति।

तत्र श्लोकाः।

त्रयोदशानां मूलानि स्रोतसां दुष्टलक्षणम्।
सामान्यं नाम पर्यायाः कोपनानि परस्परम्॥ ३४॥

दोषहेतुः पृथक्त्वेन भेषजोद्देश एव च।
स्रोतोविमाने निर्दिष्टस्तथा चादौ विनिश्चयः ॥ ३५ ॥
केवलं विहितं यस्य शरीरं सर्वभावतः।
शारीराः सर्वरोगाश्च स कर्मसु न मुह्यति ॥ ३६ ॥

इति चरकसंहितायां स्रोतोविमानं नाम पञ्चमोऽध्यायः।

---

# षष्ठोऽध्यायः।

## अथातो रोगानीकं व्याख्यास्यामः।

## इति ह स्माह भगवानात्रेयः।

द्वे रोगानीके भवतः प्रभावभेदेन साध्यं चासाध्यं च, द्वे रोगानीके बलभेदेन मृदु च दारुणं च, द्वे रोगानीके अधिष्ठानभेदेन मनोऽधिष्ठानं शरीराधिष्ठानं च, रोगानीके द्वे निमित्तभेदेन स्वधातुवैषम्यनिमित्तं चागन्तुनिमित्तं च, द्वे रोगानीके आशयभेदेन आमाशयसमुत्थं च पक्काशयसमुत्थं च ॥ १ ॥

एवमेतत्स्वभावबलाधिष्ठाननिमित्ताशयद्वैधं समुद्भेदप्रकृत्यन्तरेण भिद्यमानमथवा संधीयमानं स्यादेकत्वं वा बहुत्वं वा, एकत्वं तावदेकमेव रोगानीकं दुःखसामान्यात्, बहुत्वं तु दश रोगानीकानि प्रभावभेदादीनि, बहुत्वमपि संख्येयं वा स्यादसंख्येयं यथोक्तमष्टोदरीये, असंख्येयं यथा महति रोगाध्याये, रुग्वर्णसमुत्थानादीनामसंख्येयत्वात् ॥ २ ॥

नच संख्येयाग्रेषु भेदप्रकृत्यन्तरीयेष्वविगीतिरित्यतो न दोषवती स्यादत्र काचित्प्रतिज्ञा, न चाविगीतिरित्यतः स्याददोषवत्, भेत्ता हि भेद्यमन्यथा भिनत्त्यन्यथा पुरस्ताद्भिन्नं, भेदप्रकृत्यन्तरेण भिन्दन् भेदसंख्याविशेषमापादयत्यनेकधा, नच पूर्वं भेदाग्रमुपहन्ति ॥ ३ ॥

समानायामपि खलु भेदप्रकृतौ प्रकृतानुपयोगान्तरमपेक्ष्य सन्ति ह्यर्थान्तराणि समानशब्दाभिहितानि। समानो हि रोगशब्दो दोषेषु व्याधिषु च वर्तते। दोषा अपि रोगशब्दमातङ्कशब्दं यक्ष्म-

शब्दं दोषप्रकृतिशब्दं विकारशब्दं च लभन्ते । तत्र दोषेषु चैव व्याधिषु च रोगशब्दः समानः शेषेषु तु विशेषवान् ॥ ४ ॥

"तत्र व्याधयोऽपरिसंख्येया भवन्त्यतिबहुत्वाद्दोषास्तु परिसंख्येया अनतिबहुत्वात्, तस्माद्यथोचितं विकारा उदाहरणार्थमनवशेषेण च दोषा व्याख्यास्यन्ते ॥ ५ ॥

रजस्तमश्च मानसौ दोषौ, तयोर्विकाराः कामक्रोधलोभमोहेर्ष्यामानमदशोकचित्तोद्वेगभयहर्षादयः ॥ ६ ॥

वातपित्तश्लेष्माणस्तु शारीरा दोषास्तेषामपि च विकारा ज्वरातीसारशोथशोषमेहकुष्ठादय इति ॥ ७ ॥

दोषाश्च केवला व्याख्याताः, विकारैकदेशश्च ॥ ८ ॥

तत्र तु खल्वेषां द्वयानामपि दोषाणां त्रिविधं प्रकोपनमसात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेति । प्रकुपितास्तु प्रकोपनविशेषाद्दूष्यविशेषाच्च विकारविशेषानभिनिर्वर्तयन्ति अपरिसंख्येयास्ते विकाराः परस्परमनुवर्तमानाः कदाचिदनुबध्नन्ति कामादयो ज्वरादयश्च । नियतस्त्वनुबन्धो रजस्तमसोः परस्परं न ह्यरजस्कं तमः ॥ ९ ॥

प्रायः शरीरदोषाणामेकाधिष्ठीयमानानां संनिपातः संसर्गो वा समानगुणत्वाद्दोषा हि दूषणैः समानाः ॥ १० ॥

तत्रानुबन्ध्यानुबन्धकृतो विशेषः, स्वतन्त्रो व्यक्तलिङ्गो यथोक्तसमुत्थानप्रशमो भवत्यनुबन्ध्यस्तद्विपरीतलक्षणोऽनुबन्धः ॥ ११ ॥

अनुबन्ध्यानुबन्धलक्षणसमन्वितास्तत्र यदि दोषा भवन्ति तत्रिकं संनिपातमाचक्षते द्वयं वा संसर्गम् । अनुबन्ध्यानुबन्धविशेषकृतस्तु बहुविधो दोषभेदः । एवमेष संज्ञाप्रकृतो भिषजां दोषेषु च व्याधिषु च नानाप्रकृतिविशेषाद्व्यूहः ॥ १२ ॥

अग्निषु तु शरीरेषु चतुर्विधो विशेषो बलभेदेन । तद्यथा—तीक्ष्णो मन्दः समो विषम इति । तत्र तीक्ष्णोऽग्निः सर्वापचारसहस्तद्विपरीतलक्षणो मन्दः । समस्तु खल्वपचारतो विकृतिमापद्यतेऽनपचारतः प्रकृताववतिष्ठते । समलक्षणविपरीतलक्षणस्तु विषम इत्येते चतुर्विधा अग्नयश्चतुर्विधानामेव पुरुषाणाम् ॥ १२ ॥

तत्र समवातपित्तश्लेष्मणां प्रकृतिस्थानां समा भवन्त्यग्नयः। वातलानां तु वाताभिभूतेऽग्न्यधिष्ठाने विषमा भवन्त्यग्नयः। पित्तलानां तु पित्ताभिभूतेऽग्न्यधिष्ठाने तीक्ष्णा भवन्त्यग्नयः। श्लेष्मलानां तु श्लेष्माभिभूते ह्यग्न्यधिष्ठाने मन्दा भवन्त्यग्नयः। तत्र केचिदाहुर्न समवातपित्तश्लेष्माणो जन्तवः सन्ति विषमाहारोपयोगित्वान्मनुष्याणां, तस्माच्च केचिद्वातप्रकृतयः केचित्पित्तप्रकृतयः केचित्पुनः श्लेष्मप्रकृतयो भवन्तीति। तच्चानुपपन्नं। कस्मात्कारणात्समवातपित्तश्लेष्माणं ह्यरोगमिच्छन्ति भिषजः। प्रकृतिश्चारोग्यम्, आरोग्यार्था च भेषजप्रवृत्तिः सा चेष्टारूपा, तस्माद्भवन्ति समवातपित्तश्लेष्माणः। न तु खलु सन्ति वातप्रकृतयः पित्तप्रकृतयः श्लेष्मप्रकृतयो वा। तस्य तस्य किल दोषस्य हि अधिकभावात्सा सा दोषप्रकृतिरुच्यते मनुष्याणाम्॥ १४॥

न च विकृतेषु दोषेषु प्रकृतिस्थत्वमुपपद्यते। तस्मान्नैताः प्रकृतयः सन्ति। सन्ति तु खलु वातलाः पित्तलाः श्लेष्मलाश्चाप्रकृतिस्थास्तु ते ज्ञेयाः॥ १५॥

तेषां तु खलु चतुर्विधानां पुरुषाणां चत्वार्यन्नप्रणिधानानि श्रेयस्कराणि। तत्र समसर्वधातूनां सर्वाकारसमम्। अधिकदोषाणां तु त्रयाणां यथास्वं दोषाधिक्यमभिसमीक्ष्य दोषप्रतिकूलयोगीनि त्रीण्यन्नप्रणिधानानि श्रेयस्कराणि यावदग्नेः समीभावात्, समे तु सममेव तु कार्यमेवं चेष्टाभेषजप्रयोगाश्चापरे, तद्विस्तरेणानुव्याख्यास्यन्ते। त्रयस्तु पुरुषा भवन्त्यातुरास्ते त्वनातुरास्तन्त्रान्तरीयाणां भिषजाम्। तद्यथा—वातलः श्लेष्मलः पित्तल इति॥ १६॥

तेषां विशेषविज्ञानं वातलस्य वातनिमित्ताः पित्तलस्य पित्तनिमित्ताः श्लेष्मलस्य श्लेष्मनिमिता व्याधयः प्रायेण बलवन्तश्च॥ १७॥

तत्र वातलस्य प्रकोपणोक्तान्यासेवमानस्य क्षिप्रं वातः प्रकोपमापद्यते, न तथेतरौ॥ १८॥

स तस्य प्रकोपमापन्नो यथोक्तैर्विकारैः शरीरमुपतपति बलवर्णसुखायुषामुपघाताय॥ १९॥

तस्यावजयनं स्नेहस्वेदौ विधियुक्तौ मृदूनि च संशोधनानि स्नेहोष्णमधुराम्ललवणयुक्तानि तद्वदभ्यवहार्याण्युपनाहनोपवेष्टनोन्मर्दनपरिषेकावगाहनसंवाहनावपीडनवित्रासनविस्मापनविस्मारणानि सुरासवविधानं स्नेहाश्चानेकयोनयो दीपनीयपाचनीया वातहरविरेचनीयोपहिताः शतपाकाः सहस्रपाकाः सर्वशः प्रयोगार्थां बस्तयो बस्तिनियमः सुखशीलता चेति ॥ २० ॥

पित्तलस्यापि पित्तप्रकोपणोक्तान्यासेवमानस्य क्षिप्रं पित्तं प्रकोपमापद्यते तथा नेतरौ ॥ २१ ॥

तदस्य प्रकोपमापन्नं यथोक्तैर्विकारैः शरीरमुपतपति बलवर्णसुखायुषामुपघाताय ॥ २२ ॥

तस्यावजयनं सर्पिष्पानं सर्पिषा च स्नेहनमधश्च दोषहरणं मधुरतिक्तकषायशीतानां चौषधानामभ्यवहार्याणामुपयोगो मृदुमधुरसुरभिशीतहृद्यानां गन्धानां चोपसेवा मुक्तामणिहारावलीनां च पवनशिशिरवारिसंस्थितानां धारणमुरसा क्षणे क्षणे स्रक्चन्दनप्रियङ्गुकालीयमृणालशीतवातवारिभिरुत्पलकुमुदकोकनदसौगन्धिकपद्मानुगतैश्च वारिभिरभिप्रोक्षणं श्रुतिसुखमृदुमधुरमनोऽनुगानां च गीतवादित्राणां श्रवणं चाभ्युदयानां सुहृद्भिश्च संयोगः संयोगश्चेष्टाभिः स्त्रीभिः शीतोपहितांशुकस्रग्धारिणीभिर्निशाकरांशुशीतप्रवातहर्म्यवासः शैलान्तरपुलिनशिशिरसदनवसनव्यजनपवनानां सेवा रम्याणां चोपवनानां सुखशिशिरसुरभिमारुतोपवातानामुपसेवनं सेवनं च नलिनोत्पलपद्मकुमुदसौगन्धिकपुण्डरीकशतपत्रहस्तानां सौम्यानां च सर्वभावानामिति ॥ २३ ॥

श्लेष्मलस्यापि श्लेष्मप्रकोपणोक्तान्यासेवमानस्य क्षिप्रं श्लेष्मा प्रकोपमापद्यते न तथेतरौ दोषौ ॥ २४ ॥

तदस्य प्रकोपमापन्नो यथोक्तैर्विकारैः शरीरमुपतपति बलवर्णसुखायुषामुपघाताय ॥ २५ ॥

तस्यावजयनं विधियुक्तानि तीक्ष्णोष्णानि संशोधनानि रूक्षप्रायाणि चाभ्यवहार्याणि कटुतिक्तकषायोपहितानि तथैव धावनल-

ङ्घनप्लवनपरिसरणजागरणानि युद्धव्यवायव्यायामोन्मर्दनस्नानोत्सादनानि विशेषतस्तीक्ष्णानां दीर्घकालस्थितानां मद्यानामुपयोगः सर्वशश्चोपवासस्तथोष्णवासः सधूमपानः सुखप्रतिषेधश्च सुखार्थमेवेति ॥ २६ ॥

भवति चात्र ।

सर्वरोगविशेषज्ञः सर्वकार्यविशेषवित् ।
सर्वभेषजतत्त्वज्ञो राज्ञः प्राणपतिर्भवेत् ॥ २७ ॥

तत्र श्लोकाः ।

प्रकृत्यन्तरभेदेन रोगानीकविकल्पनम् ।
परस्पराविरोधश्च सामान्यं रोगदोषयोः ॥ २८ ॥
दोषसंख्या विकाराणामेकदोषप्रकोपणम् ।
जरणं प्रतिचिन्ता च कायाग्नेर्धुक्षणानि च ॥ २९ ॥
नराणां वातलादीनां प्रकृतिस्थापनानि च ।
रोगानीके विमानेऽस्मिन्व्याहृतानि महर्षिणा ॥ ३० ॥

इति चरकसंहितायां विमानस्थाने षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः ।

### अथातो व्याधितरूपीयमध्यायं व्याख्यास्यामः ।
### इति ह स्माह भगवानात्रेयः ।

द्वौ पुरुषौ व्याधितरूपौ भवतः । तद्यथा—गुरुव्याधित एकः सत्त्वबलशरीरसंपदुपेतत्वाल्लघुव्याधित इव दृश्यते । लघुव्याधितोऽपरः सत्त्वादीनामधमत्वाद्गुरुव्याधित इव दृश्यते ॥ १ ॥

तयोरकुशलाः केवलं चक्षुषैव रूपं दृष्ट्वा व्यवस्यन्तो व्याधिगुरुलाघवे विप्रतिपद्यन्ते । न हि ज्ञानावयवेन कृत्स्ने ज्ञेये ज्ञानमुत्पद्यते ॥ २ ॥

विप्रतिपन्नास्तु खलु रोगज्ञाने उपक्रमयुक्तिज्ञाने चापि विप्रतिपद्यन्ते । ते यदा गुरुव्याधितं लघुव्याधितरूपमासादयन्ति तदा

तमल्पदोषं मत्वा संशोधनकालेऽस्मै मृदुसंशोधनं प्रयच्छन्तो भूय एवास्य दोषमुदीरयन्ति । यदा तु लघुव्याधितं गुरुव्याधितरूपमासादयन्ति तं महादोषं मत्वा संशोधनकालेऽस्मै तीक्ष्णं संशोधनं प्रयच्छन्तो दोषानतिनिर्हृत्य शरीरमस्य क्षिण्वन्ति ॥ ३ ॥

एवमवयवेन ज्ञानस्य कृत्स्ने ज्ञेये ज्ञानमिति मन्यमानाः स्खलन्ति, विदितवेदितव्यास्तु भिषजः सर्वं सर्वथा यथासंभवं परीक्ष्यं परीक्ष्याध्यवस्यन्तो न क्वचन विप्रतिपद्यन्ते, यथेष्टमर्थमभिनिर्वर्तयन्ति चेति ॥ ४ ॥

तत्र श्लोकाः ।

"सत्त्वादीनां विकल्पेन व्याधितं रूपमातुरे ।
दृष्ट्वा विप्रतिपद्यन्ते बाला व्याधिबलाबले ॥ ५ ॥
ते भेषजमयोगेन कुर्वन्त्यज्ञानमोहिताः ।
व्याधितानां विनाशाय क्लेशाय महतेऽपि वा ॥ ६ ॥
प्राज्ञास्तु सर्वमाज्ञाय परीक्ष्यमिह सर्वथा ।
न स्खलन्ति प्रयोगेषु भेषजानां कदाचन ॥ ७ ॥"

इति व्याधितरूपाधिकारे श्रुत्वा व्याधितरूपसंख्याग्रसंभवं व्याधितरूपहेतुविप्रतिपत्तौ च कारणं सापवादं संप्रतिपत्तिकारणं चानपवादं निशम्य भगवन्तमात्रेयमग्निवेशोऽतः परं सर्वक्रमीणां पुरुषसंश्रयाणां समुत्थानस्थानसंस्थानवर्णनामप्रभावचिकित्सितविशेषान्पप्रच्छोपसंगृह्य पादौ । अथास्मै प्रोवाच भगवानात्रेयः । इह खलु अग्निवेश विंशतिविधाः क्रिमयः पूर्वमुक्ता नानाविधेन प्रविभागेनान्यत्र सहजेभ्यः ॥ ८ ॥

ते पुनः प्रकृतिभिर्भिद्यमानाश्चतुर्विधाः । तद्यथा—पुरीषजाः श्लेष्मजाः शोणितजा मलजाश्चेति । तत्र मलो बाह्यश्चाभ्यन्तरश्च, तत्र बाह्ये मले जातान्मलजान्संचक्ष्महे, तेषां समुत्थानं मृजावर्जनं, स्थानं केशश्मश्रुलोमपक्ष्मवासांसि, संस्थानमणवस्तिलाकृतयो बहुपादाः, वर्णस्तु कृष्णः शुक्लश्च, नामानि चैषां यूकाः पिपीलिकाश्चेति, प्रभावः कण्डूजननं कोठपिडकाभिनिर्वर्तनं च, चिकित्सितं त्वेषामपकर्षणं मलोपघातो मलकराणां च भावानामनुपसेवनमिति ॥९॥

शोणितजानां तु कुष्ठैः समानं समुत्थानं, स्थानं रक्तवाहिन्यो धमन्यः, संस्थानमणवो वृत्ताश्चापादाश्च सूक्ष्मत्वाच्चैके भवन्त्यदृश्याः, वर्णस्ताम्रः, नामानि केशादा लोमादा लोमद्वीपाः सौरसा औदुम्बरा जन्तुमातर इति। प्रभावः केशश्मश्रुनखलोमपक्ष्मापध्वंसो व्रणगतानां च हर्षकण्डूतोदसंसर्पणानि अतिवृद्धानां च त्वक्शिरास्नायुमांसतरुणास्थिभक्षणमिति, चिकित्सितमप्येषां कुष्ठैः समानं तदुत्तरकालमुपदेक्ष्यामः ॥ १० ॥

श्लेष्मजाः क्षीरगुडतिलमत्स्यानूपमांसपिष्टान्नपरमान्नकुसुम्भस्नेहाजीर्णपूतिक्लिन्नसंकीर्णविरुद्धासात्म्यभोजनसमुत्थानाः। तेषामामाशयः स्थानं, प्रभावस्तु ते प्रवर्धमानास्तूर्ध्वमधो वा विसर्पन्ति, उभयतो वा। संस्थानवर्णविशेषास्तु श्वेताः पृथुब्रध्नसंस्थानाः केचित् केचिद्वृत्तपरिणाहाः गण्डूपदाकृतयश्च श्वेतास्ताम्रावभासाः, केचिदणवो दीर्घास्तन्त्वाकृतयः श्वेताः। तेषां त्रिविधानां श्लेष्मनिमित्तानां क्रिमीणां नामानि अन्त्रादाः, उदरादाः, हृदयादाश्चुरवो, दर्भपुष्पाः, सौगन्धिकाः, महागुदाश्च इति। प्रभावो हृल्लासास्यसंस्रवणमरोचकाविपाकौ ज्वरो मूर्च्छाजृम्भाक्षवथुरानाहोऽङ्गमर्दः छर्दिः कार्श्यं पारुष्यमिति ॥ ११ ॥

पुरीषजास्तुल्यसमुत्थानाः श्लेष्मजैस्तेषां संस्थानं पक्वाशयः। प्रभावस्तु ते प्रवर्धमानास्त्वधो विसर्पन्ति। यस्य पुनरामाशयाभिमुखाः स्युस्तदनन्तरं तस्योद्गारनिश्वासाः पुरीषगन्धिनः स्युः। संस्थानवर्णविशेषास्तु सूक्ष्मवृत्तपरीणाहाः श्वेता दीर्घोर्णांशुकसंकाशाः केचित्। केचित्पुनः स्थूलवृत्तपरीणाहाः श्यावनीलहरितपीताः। तेषां नामानि ककेरुका मकेरुका लेलिहाः शालूनकाः सौसुरादाश्चेति। प्रभावः पुरीषभेदः कार्श्यं पारुष्यं लोमहर्षाभिनिर्वर्तनं च। तत्र वास्य गुदमुखं परितुदन्तः कण्डूश्चोपजनयन्तो गुदमुखं पर्यासते। स जातहर्षो गुदान्निष्क्रमणमतिवेलं करोति ॥ १२ ॥

इत्येष श्लेष्मजानां पुरीषजानां च क्रिमीणां समुत्थानादिविशेषः। चिकित्सितं तु खल्वेषां समासेनोपदिश्य पश्चाद्विस्तरेणोपदेक्ष्यते। तत्र सर्वक्रिमीणामपकर्षणमेवादितः कार्यम्। ततः प्र-

कृतिविघातोऽनन्तरं निदानोक्तानां भावानामनुपसेवनमिति ॥१३॥

तत्रापकर्षणं हस्तेनाभिमृश्यापनयनमुपकरणवतामुपकरणेन वा। स्थानगतानां तु कृमीणां भेषजेनापकर्षणं न्यायतश्चतुर्विधम् । तद्यथा—शिरोविरेचनं वमनं विरेचनमास्थापनमित्यपकर्षणविधिः ॥ १४ ॥

प्रकृतिविघातस्त्वेषां कटुतिक्तकषायक्षारोष्णानां द्रव्याणामुपयोगो यच्चान्यदपि किंचित् श्लेष्मपुरीषप्रत्यनीकभूतं तत्स्यादिति प्रकृतिविघातः ॥ १५ ॥

अनन्तरं निदानोक्तानां भावानामनुपसेवनं, यदुक्तं निदानविधौ तस्य वर्जनं तथाविधप्रायाणां चापरेषां द्रव्याणामिति लक्षणतश्चिकित्सितमनुव्याख्यातम् । एतदेव पुनर्विस्तरेणोपदेक्ष्यते ॥ १६ ॥

अथैनं कृमिकोष्ठमातुरमग्रे षड्रात्रं सप्तरात्रं वा स्नेहस्वेदाभ्यामुपपाद्य श्वोभूते एनं संशोधनं पाययितास्मीति क्षीरदधिगुडतिलमत्स्यानूपमांसपिष्टान्नपरमान्नकुसुम्भस्नेहसंप्रयुक्तैर्भोज्यैः सायं प्रातरुपपादयेत्समुदीरणार्थं चैव कृमीणां कोष्ठाभिसरणार्थं च ॥ १७ ॥

भिषक् अथ व्युष्टायां रजन्यां सुखोषितं सुप्रजीर्णभुक्तं च विज्ञायास्थापनवमनविरेचनैस्तदहरेवोपपादयेत् ॥ १८ ॥

उपपादनीयश्चेत्स्यात्सर्वान्परीक्ष्य विशेषान्समीक्ष्य सम्यक् । अथाहरेति ब्रूयान्मूलकसर्षपलशुनकरञ्जशिग्रुमधुशिग्रुखरपुष्पभूस्तृणसुमुखसुरसकुठेरक 'गण्डीर' कण्डीरकालमालकपर्णासक्षवकफणिज्जकानि । सर्वाणि अथवा यथालाभम् । तानि आहृतान्यभिसमीक्ष्य खण्डशश्छेदयित्वा प्रक्षाल्य पानीयेन सुप्रक्षालितायां स्थाल्यां समावाप्य गोमूत्रेणार्धोदकेनाभ्यासिच्य साधयेत् । सततमवघट्टयेत् । दर्व्या तस्मिन् शीतीभूते तु उपयुक्तभूयिष्ठेऽम्भसि गतरसेष्वौषधेषु स्थालीमवतार्य सुपरिपूतं कषायं सुखोष्णं मदनफलपिप्पलीविडङ्गकल्कतैलोपहितं सर्जिकालवणमभ्यासिच्य बस्तौ विधिवदास्थापयेदेनम् ॥ १९ ॥

तथार्कालर्ककुटजाढकीकुष्ठकैटर्यकषायेण तथा शिग्रुपीलुकुस्तुम्बुरुकटुकसर्षपकषायेण तथामलकशृङ्गवेरदारुहरिद्रापिचुमर्दकषायेण

मदनफलसंयोगसंयोजितेन त्रिरात्रं सप्तरात्रं वा स्थापयेत् ॥ २० ॥

प्रत्यागते च पश्चिमे बस्तौ प्रत्याश्वस्तं तदहरेवोभयतो भागहरणं संशोधनं पाययेद्युक्त्या, तस्य विधिरुपदेक्ष्यते ॥ २१ ॥

मदनफलपिप्पलीकषायेष्वञ्जलिमात्रेण त्रिवृत्कल्काक्षमात्रमालोड्य पातुमस्मै प्रयच्छेत् । तदस्य दोषमुभयतो निर्हरति साधु २२

एवमेव कल्पोक्तानि वमनविरेचनानि संसृज्य पाययेदेनं बुद्ध्या सर्वविशेषानवेक्ष्यमाणः ॥ २३ ॥

अथैनं सम्यग्विरिक्तं विज्ञायापराह्णे शैखरिककषायेण सुखोष्णेन परिषेचयेत् । तेनैव च कषायेण बाह्याभ्यन्तरान्सर्वोदकार्थान्कारयेच्छश्वत् । तदभावे वा कटुतिक्तकषायाणामौषधानां क्वाथैर्मूत्रक्षारैर्वा परिषेचयेत् । परिषिक्तं च एनं निवातमागारमनुप्रवेश्य पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरसिद्धेन यवाग्वादिना क्रमेणोपक्रामयेत् ॥ २४ ॥

विलेपीक्रमागतं चैनमनुवासयेद्विडङ्गतैलेनैकान्तरं द्विस्त्रिर्वा । यदि पुनरस्यातिप्रवृद्धाञ्शीर्षादीन्क्रमीन्मन्येत, शिरस्येवाभिसर्पतः कदाचित्ततः स्नेहस्वेदाभ्यामस्य शिर उपपाद्य विरेचयेदपामार्गतण्डुलादिना शिरोविरेचनेन ॥ २५ ॥

यस्त्वभ्याहार्योविधिः प्रकृतिविघातायोक्तः कृमीणां, सोऽनुव्याख्यास्यते । मूषिकपर्णीं समूलाग्रप्रतानामपहृत्य खण्डशश्छेदयित्वा उदूखले क्षोदयित्वा पाणिभ्यां पीडयित्वा च रसं गृह्णीयात् । तेन रसेन लोहितशालितण्डुलपिष्टं समालोड्य पूपलिकां कृत्वा विधूमेष्वङ्गारेषु विपाच्य विडङ्गतैललवणोपहितां कृमिकोष्ठाय भक्षयितुं प्रयच्छेत् । तदनन्तरं चाम्लकाञ्जिकमुदश्विद्वा पिप्पल्यादिपञ्चवर्गसंसृष्टं सलवणमनुपाययेत् ॥ २६ ॥

अनेन कल्पेन मार्कवार्कसहचरनीपनिर्गुण्डीसुमुखसुरसकुठेरककण्डीरकालमालकपर्णासक्षवकफणिज्जकबकुलकुटजसुवर्णक्षीरीसुरसानामन्यतमस्मिन्कारयेत्पूपलिकानि तथा किलिहीकिराततिक्तकसुवहामलकहरीतकीबिभीतकस्वरसेषु कारयेत्पूपलिकाः । स्वर-

सांश्चैतानेकैकशो द्वन्द्वशः सर्वशो वा मधुविलुलितान् प्रातरनन्नाय पातुं प्रयच्छेत् ॥ २७ ॥

अथाश्वशकृदाहृत्य महति किलिञ्जे प्रस्तीर्यातपे शोषयित्वोदूखले क्षोदयित्वा दृषदि पुनः सूक्ष्माणि चूर्णानि कारयित्वा विडङ्गकषायेण त्रिफलाकषायेण वा अष्टकृत्वो दशकृत्वो वा आतपे सुपरिभावितानि भावयित्वा दृषदि पुनः सूक्ष्माणि चूर्णानि कारयित्वा नवे कलशे समवाप्यानुगुप्तं निधापयेत् । तेषां तु खलु चूर्णानां पाणितलं चूर्णं यावद्वा साधु मन्येत क्षौद्रेण संसृज्य कृमिकोष्ठाय लेढुं यच्छेत् ॥ २८ ॥

तथा भल्लातकास्थीन्याहार्य कलशप्रमाणेन संपोथ्य स्नेहभाविते दृढे कलशे सूक्ष्मानेकच्छिद्रब्रध्ने मृदावलिप्ते समवाप्योडुपेन पिधाय भूमावाकण्ठं निखातस्य स्नेहभावितस्यैवान्यस्य दृढस्य कुम्भस्योपरि समारोप्य समन्ताद्गोमयैरुपचित्य दाहयेत् । स यदा जानीयात् साधु दग्धानि गोमयानि गलितस्नेहानि भल्लातकास्थीनि ततस्तं कुम्भमुद्धारयेत् । अथ तस्माद्द्वितीयात्कुम्भात्तं स्नेहमादाय विडङ्गतण्डुलचूर्णैः स्नेहार्धमात्रैः प्रतिसंसृज्यातपे सर्वमहः स्थापयित्वा ततोऽस्मै मात्रां प्रयच्छेत्पानाय । तेन साधु विरिच्यते । विरिक्तस्य चानुपूर्वी यथोक्ता ॥ २९ ॥

एवमेव भद्रदारुसरलकाष्ठस्नेहानुपकल्प्य पातुं प्रयच्छेत् । अनुवासयेच्चैनमनुवासनकाले ॥ ३० ॥

अथाहरेति ब्रूयाच्छारदान्नवांस्तिलान्संपदुपेतानाहृत्य सुनिष्पूतान्निष्पूय सुशुद्धाञ्शोधयित्वा विडङ्गकषाये सुखोष्णे प्रक्षिप्य सुनिर्वापितान्निर्वापयेता दोषगमनात् । गतदोषानभिसमीक्ष्य सुप्रलूनान्प्रलुच्य पुनरेव सुनिष्पूतान्निष्पूय सुशुद्धाञ्शोषयित्वा विडङ्गकषायेण त्रिःसप्तकृत्वः सुपरिभावितान्भावयित्वातपे शोषयित्वोदूखले संक्षुद्य दृषदि पुनः श्लक्ष्णपिष्टान्कारयित्वा द्रोण्यामभ्यवधाय विडङ्गकषायेण मुहुर्मुहुरवसिंचन् पाणिमर्दं मर्दयेत् । तस्मिन्खलु प्रपीड्यमाने यत्तैलमुदियात्तत्पाणिभ्यां पर्यादाय शुचौ दृढे कलशे समासिच्यानुगुप्तं निधापयेत् । अथाहरेति ब्रूयात्तिल्वकोद्दालकयो-

द्वौ बिल्वमात्रौ पिण्डौ श्लक्ष्णपिष्टौ विडङ्गकषायेण, ततोऽर्धश्यामात्रिवृतयोरर्धमात्रौ दन्तीद्रवन्त्योरतोऽर्धमात्रौ चव्यचित्रकयोरित्येतत्सम्भारं विडङ्गकषायस्यार्धाढकमात्रेण प्रतिसंसृज्य ततस्तैलप्रस्थमावाप्य सर्वमालोड्य महत्युपयोगे समासिच्याग्नावधिश्रित्य महत्यासने सुखोपविष्टः सर्वतः स्नेहमवलोकयन्नजस्रं मृद्वग्निना साधयेद्दर्व्या सततमवघट्टयन् । स यदा जानीयाद्विरमति शब्दः, प्रशाम्यति च फेनः, प्रसादमापद्यते स्नेहो, यथास्वं गन्धवर्णरसोत्पत्तिः संवर्तते च, भेषजमङ्गुलिभ्यां मृद्यमानमनतिमृदुमनतिदारुणमनङ्गुलिग्राहि चेति । स कालस्तस्यावतारणाय । ततस्तमवतीर्णं हृतं शीतीभूतमहतेन वाससा परिपूय शुचौ दृढे कलशे समासिच्य पिधानेन पिधाय शुक्लेन वस्त्रपट्टेनाच्छाद्य सूत्रेण सुबद्धं सुनिगुप्तं निधापयेत् । ततोऽस्मै मात्रां प्रयच्छेत्पानाय ॥ ३१ ॥

तेन साधु विरिच्यते । सम्यगपहृतदोषस्य चास्यानुपूर्वी यथोक्ता । ततश्चैनमनुवासयेदनुवासनकाले ॥ ३२ ॥

एतेनैव च पाकविधिना सर्षपकरञ्जकोपातकीस्नेहानुपकल्प्य पाययेत्सर्वविशेषानवेक्ष्यमाणस्तेनागदो भवति ॥ ३३ ॥

इत्येतत् द्वयानां श्लेष्मपुरीषसंभवानां क्रिमीणां समुत्थानस्थानसंस्थानवर्णनामप्रभावचिकित्सितविशेषा व्याख्याताः सामान्यतः ॥ ३४ ॥

विशेषतस्तु अल्पमात्रमास्थापनानुवासनानुलोमहरणं भूयिष्ठं तेष्वौषधिपुरीषजानां क्रिमीणां चिकित्सितं कार्यं मात्राधिकं पुनः शिरोविरेचनवमनोपशमनभूयिष्ठं तेष्वौषधेषु श्लेष्मजानां क्रिमीणां चिकित्सितं कार्यम् । इत्येवं क्रिमिघ्नो भेषजविधिरनुव्याख्यातो भवति ॥ ३५ ॥

तमनुतिष्ठता यथास्वं हेतुवर्जने प्रयतितव्यम् । यथोद्देशमेवमिदं क्रिमिकोष्ठचिकित्सितं यथावदनुव्याख्यातं भवतीति ॥ ३६ ॥

तत्र श्लोकाः ।

"अपकर्षणमेवादौ क्रिमीणां भेषजं स्मृतम् ।
ततो विघातः प्रकृतेर्निदानस्य च वर्जनम् ॥ ३७ ॥

एतावद्भिषजा कार्यं रोगे रोगे यथाविधि ।
अयमेव विकाराणां सर्वेषामपि निग्रहे ॥ ३८ ॥
विधिर्दृष्टस्त्रिधा योऽयं क्रमीनुद्दिश्य कीर्तितः ।
संशोधनं संशमनं निदानस्य च वर्जनम् ॥ ३९ ॥
व्याधितौ पुरुषौ ज्ञाज्ञौ भिषजौ सप्रयोजनौ ।
विंशतिः क्रमयस्त्वेषां हेत्वादिः सप्तको गणः ॥ ४० ॥"
उक्तो व्याधितरूपीये विमाने परमर्षिणा ।
शिष्यसंबोधनार्थं च व्याधिप्रशमनाय च ॥ ४१ ॥

इति चरकसंहितायां सप्तमोऽध्यायः ॥ ७ ॥

---

# अष्टमोऽध्यायः ।

## अथातो रोगभिषग्जितीयं व्याख्यास्यामः ।

बुद्धिमानात्मनः कार्यगुरुलाघवे कर्मफलमनुबन्धं देशकालौ च विदित्वा युक्तिदर्शनाद्भिषग्बुभूषुः शास्त्रमेवादितः परीक्षेत । विविधानि हि शास्त्राणि भिषजां प्रचरन्ति लोके । तत्र यन्मन्येत महद्यशस्वि धीरपुरुषानुमोदि तमर्थबहुलमाप्तजनपूजितं त्रिविधशिष्यबुद्धिहितमपगतपुनरुक्तदोषमार्षं सुप्रणीतसूत्रभाष्यसंग्रहक्रमं स्वाधारमनवपतितशब्दमकष्टशब्दं पुष्कलाभिधानं क्रमागतार्थमर्थतत्त्वनिश्चयप्रधानं संगतार्थमसंकुलप्रकरणमाशुप्रबोधकं लक्षणवच्चोदाहरणवच्च तदभिप्रपद्येत शास्त्रम् । शास्त्रं ह्येवंविधममल इवादित्यस्तमो विधूय प्रकाशयति सर्वम् ॥ १ ॥

ततोऽनन्तरमाचार्यं परीक्षेत । तद्यथा—पर्यवदातश्रुतं परिदृष्टकर्माणं दक्षं दक्षिणं शुचिं जितहस्तमुपकरणवन्तं सर्वेन्द्रियोपपन्नं प्रकृतिज्ञं प्रतिपत्तिज्ञमनुपस्कृतविद्यमनहंकृतमनसूयकमकोपनं क्लेशक्षमं शिष्यवत्सलमध्यापकं ज्ञापनासमर्थं च इत्येवंगुणो ह्याचार्यः सुक्षेत्रमार्तवो मेघ इव सस्यगुणैः सुशिष्यमाशु वैद्यगुणैः संपादयति । तमुपसृत्यारिराधयिषुरुपचरेदग्निवच्च देववच्च राजवच्च पितृवच्च भर्तृवच्चाप्रमत्तस्ततस्तत्प्रसादात्कृत्स्नं शास्त्रमधिगम्य शा-

स्त्रस्य दृढतायामभिधानसौष्ठवस्यार्थस्य विज्ञाने वचनशक्तौ च भूयः प्रयतेत सम्यक् ॥ २ ॥

तत्रोपाया व्याख्यास्यन्ते । अध्ययनमध्यापनं तद्विद्यासंभाषेत्युपायाः ॥ ३ ॥

तत्रायमध्ययनविधिः, कल्पे कृतक्षणः प्रातरुत्थायोपव्यूषं वा कृत्वावश्यकमुपस्पृश्योदकं देवगोब्राह्मणगुरुवृद्धसिद्धाचार्येभ्यो नमस्कृत्य समे शुचौ देशे सुखोपविष्टो मनःपुरःसराभिर्वाग्भिः सूत्रमनुक्रामन्पुनःपुनरावर्तयेत् बुद्धया सम्यगनुप्रविश्यार्थतत्त्वं स्वदोषपरिहारपरदोषप्रमाणार्थमेवं मध्यन्दिनेऽपराह्णे रात्रौ च शश्वदपरिहापयन्नध्ययनमभ्यस्येदित्यध्ययनविधिः ॥ ४ ॥

अथाध्यापनविधिः, अध्यापने कृतबुद्धिराचार्यः शिष्यमादितः परीक्षेत । तद्यथा—प्रशान्तमार्यप्रकृतिकमक्षुद्रकर्माणमृजुचक्षुर्मुखनासावंशं तनुरक्तविशदजिह्वमविकृतदन्तौष्ठं अभिन्निणं धृतिमन्तमलंकृतं मेधाविनं वितर्कस्मृतिसंपन्नमुदारसत्त्वं तद्विद्यकुलजमथवा तद्विद्यवृत्तं तत्त्वाभिनिवेशिनमव्यङ्गमव्यापन्नेन्द्रियं निभृतमनुद्धतमव्यसनिनं शीलशौचाचारानुरागदाक्ष्यप्रादक्षिण्योपपन्नमध्ययनाभिकाममत्यर्थविज्ञानकर्मदर्शने चानन्यकार्यमलुब्धमनलसं सर्वभूतहितैषिणमाचार्यसर्वानुशिष्टिप्रतिकरमनुरक्तमेवंगुणसमुदितमध्याप्यमेवमाहुः । एवं चिरमाचार्यश्चाध्ययनार्थमुपस्थितमारिराधयिषुमनुभाषेत ॥ ५ ॥

उदगयने शुक्लपक्षे प्रशस्तेऽहनि पुष्यहस्तश्रवणाश्वयुजामन्यतमेन नक्षत्रेण योगमुपगते भगवति शशिनि कल्याणे मुहूर्ते स्नातः कृतोपवासो मुण्डः कषायवस्त्रसंवीतः समिधोऽग्निमाज्यमुपलेपनमुदककुम्भांश्च सुगन्धिहस्तमाल्यदामहिरण्यान्हेमरजतमणिमुक्ताविद्रुमक्षौमपरिधींश्च कुशलाजसर्षपाक्षतांश्च शुक्लांश्च सुमनसो ग्रथिताग्रथितांश्च मेध्यांश्च भक्ष्यान् गन्धांश्च पिष्टाविष्टानादायोपतिष्ठस्वेति स तथा कुर्यात् ॥ ६ ॥

तमुपस्थितमाज्ञाय समे शुचौ देशे प्राक्प्रवणे वा चतुष्किष्कुमात्रं चतुरस्रं स्थण्डिलं गोमयोदकेनोपलिप्तं कुशास्तीर्णं सुपरिहितं

परिधिभिश्चतुर्दिशं यथोक्तचन्दनोदककुम्भक्षौमहेमहिरण्यरजतमणि-मुक्ताविद्रुमालंकृतं मेध्यभक्ष्यगन्धशुक्लपुष्पलाजासर्षपाक्षतोपशोभितं कृत्वा तत्र पालाशीभिरैङ्गुदीभिरौदुम्बरीभिर्माधुकीभिर्वा समिद्भिरग्निमुपसमाधाय प्राङ्मुखः शुचिरध्यनविधिमनुविधाय मधुसर्पिर्भ्यां त्रिस्त्रिर्जुहुयादग्निम्। आशीःसंप्रयुक्तैर्मन्त्रैर्ब्राह्मणमग्निं धन्वन्तरिं प्रजापतिमश्विनौ इन्द्रमृषींश्च सूत्रकारानभिमन्त्रायमाणः। पूर्वं स्वाहेति शिष्यश्चैनमन्वारभेत हुत्वा च प्रदक्षिणमग्निमनुपरिक्रामेत्। ततोऽनुपरिक्राम्य ब्राह्मणान्स्वस्ति वाचयेत्। भिषजश्चाभिपूजयेत्॥ ७॥

अथैनमग्निसकाशे ब्राह्मणसकाशे भिषक्सकाशे चानुशिष्यात्। ब्रह्मचारिणा श्मश्रुधारिणा सत्यवादिना अमांसादेन मेध्यसेविना निर्मत्सरेणाशस्त्रधारिणा भवितव्यम्। नच ते मद्वचनात्किंचिदकार्यं स्यादन्यत्र राजद्विष्टात्प्राणहराद्विपुलादधर्म्यादनर्थसंप्रयुक्ताद्वाप्यर्थात् मदर्पणेन मत्प्रधानेन मदधीनेन मत्प्रियहितानुवर्तिना च शश्वद्भवितव्यम्। पुत्रवद्दासवदर्थिवच्चोपचरतानुसर्तव्योऽहम्। अनुत्सुकेनावहितेन अनन्यमनसा विनीतेनावेक्ष्यकारिणा अनसूयकेन चाभ्यनुज्ञातेन प्रविचरितव्यमनुज्ञाने च प्रविचरता॥ ८॥

पूर्वं गुर्वर्थोपाहरणे यथाशक्ति प्रयतितव्यम्। कर्मसिद्धिमर्थसिद्धिं यशोलाभं च प्रेत्य च स्वर्गमिच्छता भिषजा। गोब्राह्मणमादौ कृत्वा सर्वप्राणभृतां शर्मण्यासितव्यं अहरहरुत्तिष्ठता चोपविशता च सर्वात्मना चातुराणामारोग्ये प्रयतितव्यम्। जीवितहेतोरपि चातुरेभ्यो नातिदोग्धव्यम्। मनसापि च परस्त्रियो नाभिगमनीयाः। तथा सर्वमेव परस्वम्। निभृतवेशपरिच्छदेन च भवितव्यम्। अशौण्डेन अपापेन अपापसहायेन च श्लक्ष्णशुक्लधर्म्यशर्म्यधन्यसत्यहितमितवचसा देशकालविचारिणा स्मृतिमता ज्ञानोत्थानोपकरणसंपत्सु नित्यं यत्नवता। नच कदाचिद्राजद्विष्टानां राजद्वेषिणां वा महाजनद्विष्टानां महाजनद्वेषिणां वा औषधमनुविधातव्यम्। एवं सर्वेषामत्यर्थविकृतदुष्टदुःखशीलाचारो-

पचाराणामनपवादप्रतीकारादीनां मुमूर्षूणां च तथैवासंनिहितेश्वराणां स्त्रीणामनध्यक्षाणां वा ॥ ९ ॥

नच कदाचित्स्त्रीदत्तमामिषमादातव्यमननुज्ञातं भर्त्रा अथवा अध्यक्षेण । आतुरकुलं चानुप्रविशता त्वया विदितेनानुमतप्रवेशिना सार्धं पुरुषेण सुसंवीतेनावाक्शिरसा स्मृतिमता स्तिमितेन अवेक्ष्यावेक्ष्य बुद्ध्या मनसा सर्वमाचरता सम्यगनुप्रवेष्टव्यम् । अनुप्रविश्य च वाङ्मनोबुद्धीन्द्रियाणि न क्वचित्प्रणिधातव्यानि अन्यत्रातुरोपकारार्थाद्वा आतुरगतेष्वन्येषु वा भावेषु । न चातुरकुलप्रवृत्तयो बहिर्निश्चारयितव्याः । ह्रासितं चायुषः प्रमाणमातुरस्य न वर्णयितव्यं जानतापि च । तत्र यत्रोच्यमानमातुरस्य अन्यस्य वाप्युपघाताय संपद्यते । ज्ञानवतापि च नात्यर्थमात्मनो ज्ञानेन विकत्थितव्यम् । आप्तादपि हि विकत्थमानादत्यर्थमुद्विजन्ति अनेके ॥ १० ॥

न चैव ह्यस्ति आयुर्वेदस्य पारं, तस्मादप्रमत्तः शश्वदभियोगमस्मिन् गच्छेत् । तदेवं कार्यमेवं भूयश्च प्रवृत्तस्य सौष्ठवमनुसूयतापरेभ्योऽप्यागमयितव्यम् । कृत्स्नो हि लोको बुद्धिमतामाचार्यः शत्रुश्चाबुद्धिमतामेतच्चाभिसमीक्ष्य बुद्धिमता अमित्रस्यापि धन्यं यशस्यमायुष्यं पौष्टिकं लौकिकमभ्युपदिशतो वचः श्रोतव्यमनुविधातव्यं चेति ॥ ११ ॥

अतः परमिदं ब्रूयात् देवताग्निद्विजातिगुरुवृद्धसिद्धाचार्येषु ते सम्यग्वर्तितव्यम् । तेषु ते सम्यग्वर्तमानस्यायमग्निः सर्वगन्धरसरत्नबीजानि यथेरिताश्च देवताः शिवाय स्युः अतोऽन्यथा चावर्तमानस्याशिवायेति । एवं ब्रुवति चाचार्ये शिष्यस्तथेति ब्रूयात् । यथोपदेशं च कुर्वन्नध्याप्यो ज्ञेये अतोऽन्यथा त्वनध्याप्यः । अध्याप्यमध्यापयन्हि आचार्यो यथोक्तैश्चाध्यापनफलैर्योगमाप्नोति अन्यैश्चानुक्तैः श्रेयस्करैर्गुणैः शिष्यमात्मानं च युनक्ति । इति अध्यापनविधिरुक्तः ॥ १२ ॥

अध्ययनाध्यापनविधिवत्संभाषाविधिमत ऊर्ध्वं व्याख्यास्यामः । भिषक् भिषजा सह संभाषेत । तद्विद्यसंभाषा हि ज्ञानाभियो-

गसंहर्षकरी भवति । वैशारद्यमपि चाभिनिर्वर्तयति वचनशक्ति-मपि चाधत्ते यशश्चाभिदीपयति । पूर्वश्रुते च संदेहवतः पुनः श्रवणाच्छ्रुतसंशयमपकर्षति । श्रुते चासंदेहवतो भूयोऽध्यवसायम-भिनिर्वर्तयति । अश्रुतमपि च कंचिदर्थं श्रोत्रविषयमापादयति । यच्चाचार्यः शिष्याय शुश्रूषवे प्रसन्नक्रमेणोपदिशति गुह्याभिमतम-र्थजातं, तत्परस्परेण सह जल्पन्पण्डेन विजिगीषुराह संहर्षात् तस्मात्तद्विद्यसंभाषामभिप्रशंसन्ति कुशलाः ॥ १३ ॥

द्विविधा तु खलु तद्विद्यसंभाषा भवति । संधाय संभाषा विगृह्य संभाषा च । तत्र ज्ञानविज्ञानवचनप्रतिवचनशक्तिसंपन्नेनाकोपनेन अनुपस्कृतविद्येनानसूयकेन अनुनयकोविदेन क्लेशक्षमेण प्रियसं-भाषणेन च सह संधाय संभाषा विधीयते । तथाविधेन सह कथ-यन्विश्रब्धः कथयेत् । पृच्छेदपि च विश्रब्धः पृच्छते चास्मै विश्र-ब्धाय विशदमर्थं ब्रूयात् । न च निग्रहभयादुद्विजेत् । निगृह्य चैनं न हृष्येत्, नच परेषु विकत्थेत् । नच मोहादेकान्तग्राही स्यात् न चाप्रस्तुतमर्थमनुवर्णयेत् । सम्यक्चानुनयेनानुनीयेत, अनु-नयाच्च परं, तत्र चावहितः स्यादित्यनुलोमसंभाषाविधिः ॥ १४ ॥

अत उर्ध्वमितरेण सह विगृह्य संभाषेत श्रेयसा योगमात्मनः पश्यन् । प्रागेव च जल्पाज्जल्पान्तरं परावरान्तरं परिषद्विशेषांश्च सम्यक्परीक्षेत सम्यक्परीक्षा हि बुद्धिमतां कार्यप्रवृत्तिनिवृत्तिकालौ च शंसति । तस्मात्परीक्षामतिप्रशंसन्ति कुशलाः । परीक्षमाणस्तु खलु परावरान्तरमिमाञ्जल्पकगुणान् श्रेयस्करांश्च दोषवतश्च परी-क्षेत सम्यक् । तद्यथा—श्रुतं विज्ञानं धारणं प्रतिभानं वचनशक्ति-रित्येतान्गुणान् श्रेयस्करानाहुः । इमान्पुनर्दोषवतः कोपनत्वमवैशा-रद्यं भीरुत्वमनवहितत्वमिति । एतान्द्वयानपि गुणान् गुरुलाघव-वतः परस्य चैवात्मनश्च तोलयेत ॥ १५ ॥

तत्र त्रिविधः परः संपद्यते, प्रवरः प्रत्यवरः समो वा गुणवि-निक्षेपतो नत्वेवं कार्त्स्न्येन ॥ १६ ॥

परिषच्च खलु द्विविधा, ज्ञानवती, मूढपरिषच्च, सैव द्विविधा

सती त्रिविधा पुनरनेन कारणविभागेन सुहृत्परिषत्, उदासीनपरिषत्, प्रतिनिविष्टपरिषच्चेति ॥ १७ ॥

तत्र प्रतिनिविष्टायां परिषदि ज्ञानविज्ञानवचनप्रतिवचनशक्तिसंपन्नायां मूढायां वा न कथंचित्केनचित्सह जल्पो विधीयते। मूढायां तु सुहृत्परिषदि उदासीनायां वा ज्ञानविज्ञानमन्तरेणाप्यदीप्तयशसा महाजनद्विष्टेन सह जल्पो विधीयते। तद्विधेन च सह कथयता आविद्धदीर्घसूत्रसंकुलैर्वाक्यदण्डकैः कथयितव्यम्। अतिहृष्टं मुहुर्मुहुरुपहसता परं निरूपयता च परिषदमाकारैर्ब्रुवतश्चास्य वाक्यावकाशो न देयः। कष्टशब्दं च ब्रुवन्वक्तव्यो नोच्यत इति। अथवा पुनर्हीना ते प्रतिज्ञेति पुनश्चाह्वयमानः प्रतिवक्तव्यः, परिसंवत्सरं भवान् शिक्षतां तावत्। अथवा पर्याप्तमेतावत्ते। सकृदेव हि पारिक्षेपिकं निहितं निहतमाहुरिति। नास्य योगः कर्तव्यः कथंचिदप्येवं श्रेयसा सह विगृह्य वक्तव्यमित्याहुरेके। न त्वेवं ज्यायसा सह विग्रहं प्रशंसन्ति कुशलाः ॥ १८ ॥

प्रत्यवरेण तु सह समानाभिमतेन वा विगृह्य जल्पता सुहृत्परिषदि कथयितव्यम्। अथवाप्युदासीनपरिषदि अनवधानश्रवणज्ञानविज्ञानोपधारणवचनशक्तिसंपन्नायां कथयता चावहितेन परस्य साद्गुण्यदोषबलमवेक्षितव्यम्। समवेक्ष्य च यत्रैनं श्रेष्ठं मन्येत नास्य तत्र जल्पं योजयेदनाविष्कृतमयोगं कुर्वन्। यत्र त्वेनमवरं मन्येत तत्रैवैनमाशु निगृह्णीयात् ॥ १९ ॥

तत्र नु खल्विमे प्रत्यवराणामाशुनिग्रहे भवन्त्युपायाः। तद्यथा—श्रुतहीनं महता सूत्रपाठेनाभिभवेत्, विज्ञानहीनं पुनः कष्टशब्देन वाक्येन वाक्यधारणाहीनमाविद्धदीर्घसंकुलैर्वाक्यदण्डकैः, प्रतिभाहीनं पुनर्वचनेनानेकविधेनानेकार्थवाचिना, वचनशक्तिहीनमर्धोक्तस्य वाक्यस्याक्षेपेण, अविशारदमपत्रपणेन, कोपनमायासनेन, भीरुं वित्रासनेन, अनवहितं नियमनेन इत्येवमेतैरुपायैरवरमभिभवेत् ॥ २० ॥

विगृह्य कथयेद्युक्त्या युक्तं च न निवारयन्।
विगृह्य भाषा तीव्रं हि केषांचिद्द्रोहमावहेत् ॥ २१ ॥

नाकार्यमस्ति क्रुद्धस्य नावाच्यमपि विद्यते ।
कुशला नाभिनन्दन्ति कलहं समितौ सताम् ॥ २२ ॥

एवं प्रवृत्ते तु वादे प्रागेव वादात्तावदिदं कर्तुं यतेत । परिषदाऽयनभूतमात्मनः प्रकरणमादेशयितव्यम् । यद्वा भृशदुर्गं स्यात् पक्षमथवा परस्य भृशं विमुखमानयेत् । परिषदि चोपसंहितायामशक्यमस्माभिर्वक्तुमिति तूष्णीमासीत्, एषैव परिषद्यथेष्टं यथायोग्यं यथाभिप्रायं वादं वादमर्यादां च स्थापयतीत्युक्त्वा ॥ २३ ॥

तत्रेदं वादमर्यादालक्षणं भवति—इदं वाच्यमिदमवाच्यमेवं सति पराजितो भवतीति । इमानि खलु पदानि भिषग्वादमार्गज्ञानार्थमधिगम्यानि भवन्ति । तद्यथा—वादो द्रव्यं, गुणः, कर्म, सामान्यं, विशेषः, समवायः, प्रतिज्ञा, स्थापना, प्रतिष्ठापना, हेतुः, उपनयः, निगमनं, उत्तरं, दृष्टान्तः, सिद्धान्तः, शब्दः, प्रत्यक्षं, अनुमानं, औपम्यं, ऐतिह्यं, संशयः, प्रयोजनं, सव्यभिचारं, जिज्ञासा, व्यवसायः, अर्थप्राप्तिः, संभवः, अनुयोज्यं, अननुयोज्यं, अनुयोगः, प्रत्यनुयोगः, वाक्यदोषः, वाक्यप्रशंसा, छलं, अहेतुः, अतीतकालं, उपालंभः, परिहारः, प्रतिज्ञाहानिः, अभ्यनुज्ञा, हेत्वन्तरं, अर्थान्तरं, निग्रहस्थानमिति ॥ २४ ॥

तत्र तु वादः । वादो नाम यः परस्परेण सह शास्त्रपूर्वकं विगृह्य कथयति । स वादो द्विविधः संग्रहेण, जल्पो वितण्डा च । तत्र पक्षाश्रितयोर्वचनं जल्पः । जल्पविपर्ययो वितण्डा । यथैकस्य पक्षः पुनर्भवोऽस्तीति नास्तीत्यपरस्य । तौ च स्वपक्षं स्वहेतुभिः स्थापयतः परपक्षमुद्भावयत एष जल्पः । जल्पविपर्ययो वितण्डा । वितण्डा नाम परपक्षे दोषवचनमात्रमेव ॥ २५ ॥

द्रव्यगुणकर्मसामान्यविशेषसमवायाः स्वलक्षणैः श्लोकस्थाने पूर्वमुक्ताः ॥ २६ ॥

अथ प्रतिज्ञा नाम साध्यवचनं, यथा नित्यः पुरुष इति ॥२७॥

अथ स्थापना । स्थापना नाम तस्या एव प्रतिज्ञाया हेतुदृष्टान्तोपनयनिगमैः स्थापना, पूर्वं हि प्रतिज्ञा, पश्चात्स्थापना । किं ह्यप्रतिज्ञातं

स्थापयिष्यति, यथा नित्यः पुरुष इति प्रतिज्ञा। हेतुः अकृतकत्वा-दिति। दृष्टान्तो यथाकाशं तच्च नित्यम्। उपनयो यथा चाकृतक-माकाशं तथा पुरुषः। निगमनं तस्मान्नित्य इति ॥ २८ ॥

अथ प्रतिष्ठापना नाम या परप्रतिज्ञायाः प्रति विपरीतार्थस्था-पना। यथा अनित्यः पुरुष इति प्रतिज्ञा। हेतुरैन्द्रियकत्वात्। दृष्टान्तो यथा घट ऐन्द्रियकः स चानित्यः। उपनयो यथा घटस्तथा पुरुषः। निगमनं तस्मादनित्य इति ॥२९॥

अथ हेतुः। हेतुर्नामोपलब्धिकारणं तत्प्रत्यक्षमनुमानमैतिह्यमौ-पम्यमिति। एभिर्हेतुभिर्यदुपलभ्यते तत्तत्त्वम् ॥ ३० ॥

उपनयो निगमनं चोक्तं स्थापनाप्रतिष्ठापनाव्याख्यायाम् ॥३१॥

अथ उत्तरं नाम साधर्म्योपदिष्टे वा हेतौ वैधर्म्यवचनं वैधर्म्यो-पदिष्टे वा साधर्म्यवचनं, यथा हेतुसधर्माणो विकाराः शीतकस्य हि व्याधेर्हेतुसाधर्म्यवचनं हिमशिशिरवातसंस्पर्शा इति ब्रुवतः परो ब्रूयाद्धेतुविधर्माणो विकाराः, यथा शरीरावयवानां दाहौष्ण्यं कोथ-प्रपचने हेतुवैधर्म्यं हिमशिशिरवातसंस्पर्शा इति। एतत्सविपर्यय-मुत्तरम् ॥ ३२ ॥

अथ दृष्टान्तः। दृष्टान्तो नाम यत्र मूर्खविदुषां बुद्धिसाम्यं यो वर्ण्यं वर्णयति। यथाग्निरुष्णो द्रवमुदकं स्थिरा पृथिवी आदित्यः प्रकाशक इति, यथा वादित्यः प्रकाशकस्तथा सांख्यवचनं प्रकाश-कमिति ॥ ३३ ॥

अथ सिद्धान्तः। सिद्धान्तो नाम यः परीक्षकैर्बहुविधं परीक्ष्य हेतुभिः साधयित्वा स्थाप्यते निर्णयः स सिद्धान्तः। स चोक्तश्चतु-र्विधः, सर्वतन्त्रसिद्धान्तः प्रतितन्त्रसिद्धान्तोऽधिकरणसिद्धान्तो-ऽभ्युपगमसिद्धान्त इति ॥ ३४ ॥

तत्र सर्वतन्त्रसिद्धान्तो नाम तस्मिंस्तस्मिन्सर्वस्मिंस्तन्त्रे तत्प्रसिद्धं सन्ति निदानानि सन्ति व्याधयः सन्ति सिद्ध्युपायाः साध्याना-मिति ॥ ३५ ॥

प्रतितन्त्रसिद्धान्तो नाम तस्मिंस्तस्मिंस्तन्त्रे तत्तत्प्रसिद्धं, यथान्य-त्राष्टौ रसाः षडन्यत्र। पञ्चेन्द्रियाणि यथान्यत्र षडिन्द्रियाणि,

वातादिकृताः सर्वविकारा यथान्यत्र वातादिकृता भूतकृताश्च प्रसिद्धाः ॥ ३६ ॥

अधिकरणसिद्धान्तो नाम स यस्मिन्नधिकरणे संस्तूयमाने सिद्धान्यन्यान्यप्यधिकरणानि भवन्ति । यथा न मुक्तः कर्मानुबन्धिकं कुरुते निस्पृहत्वादिति प्रस्तुते सिद्धाः कर्मफलमोक्षपुरुषप्रेत्यभावा भवन्ति ॥ ३७ ॥

अभ्युपगमसिद्धान्तो नाम यमर्थमसिद्धमपरीक्षितमनुपदिष्टमहेतुकं वा वादकालेऽभ्युपगच्छन्ति भिषजः । तद्यथा—द्रव्यं न प्रधानमिति कृत्वा वक्ष्यामः, गुणः प्रधानमिति कृत्वा वक्ष्याम इत्येवमादिश्चतुर्विधः सिद्धान्तः ॥ ३८ ॥

शब्दो नाम वर्णसमाम्नायः । स चतुर्विधः, दृष्टार्थश्चादृष्टार्थश्च सत्यश्चानृतश्चेति । तत्र दृष्टार्थः, त्रिभिर्हेतुभिर्दोषाः प्रकुप्यन्ति षड्भिरुपक्रमैश्च प्रशाम्यन्ति । श्रोत्रादिसद्भावे शब्दादिग्रहणमिति । अदृष्टार्थः पुनरस्ति प्रेत्यभावोऽस्ति मोक्ष इति । सत्यो नाम यथार्थभूतः । सन्त्यायुर्वेदोपदेशाः । सन्त्युपायाः साध्यानाम् । सन्त्यारम्भफलानीति । सत्यविपर्ययाच्चानृतम् ॥ ३९ ॥

अथ प्रत्यक्षम् । प्रत्यक्षं नाम तद्यथात्मना पञ्चेन्द्रियैश्च स्वयमुपलभ्यते । तत्रात्मप्रत्यक्षाः सुखदुःखेच्छाद्वेषादयः । शब्दादयस्त्विन्द्रियप्रत्यक्षाः ॥ ४० ॥

अनुमानं नाम तर्को युक्त्यपेक्षः । यथोक्तम्—अग्निं जरणशक्त्या बलं व्यायामशक्त्या श्रोत्रादीनि शब्दादिग्रहणेनेन्द्रियाणीत्येवमादिः ॥ ४१ ॥

अथ औपम्यम् । औपम्यं नाम यदन्येनान्यस्य सादृश्यमधिकृत्य प्रकाशनं, यथा दण्डेन दण्डकस्य धनुषा धनुष्टम्भस्य इष्वासिना आरोग्यदस्येति ॥ ४२ ॥

अथ ऐतिह्यम् । ऐतिह्यं नामाप्तोपदेशो वेदादिः ॥ ४३ ॥

अथ संशयः । संशयो नाम संदिग्धेष्वर्थेष्वनिश्चयः । यथा किमकालमृत्युरस्ति नास्तीति ॥ ४४ ॥

अथ प्रयोजनम् । प्रयोजनं नाम यदर्थमारभ्यन्त आरम्भाः ।

यथा यद्यकालमृत्युरस्ति ततोऽहमात्मानमायुष्यैरुपचरिष्यामि अनायुष्याणि च परिहरिष्यामि कथं मामकालमृत्युः प्रसहेतेति ॥४५॥

अथ सव्यभिचारम् । सव्यभिचारं नाम यद्व्यभिचरणं यथा भवेदिदमौषधं तस्मिन्व्याधौ यौगिकमथवा नेति ॥ ४६ ॥

अथ जिज्ञासा । जिज्ञासा नाम परीक्षा । यथा भेषजपरीक्षोत्तरकालमुपदेक्ष्यते ॥ ४७ ॥

अथ व्यवसायः । व्यवसायो नाम निश्चयः । यथा वातिक एवायं व्याधिरिदमेवास्य भेषजमिति ॥ ४८ ॥

अथार्थप्राप्तिः । अर्थप्राप्तिर्नाम यत्रैकेनार्थेनोक्तेनापरस्यार्थस्यानुक्तस्य सिद्धिः । यथा नायं संतर्पणसाध्यो व्याधिरित्युक्ते भवत्यर्थप्राप्तिरपतर्पणसाध्योऽयमिति । नानेन दिवा भोक्तव्यमित्युक्ते भवत्यर्थप्राप्तिर्निशि भोक्तव्यमिति ॥ ४९ ॥

अथ संभवः । संभवो नाम यो यतः संभवति स तस्य संभवः । यथा षट् धातवो गर्भस्य व्याधेरहितं हितमारोग्यस्येति ॥ ५० ॥

अथानुयोज्यम् । अनुयोज्यं नाम यद्वाक्यं वाक्यदोषयुक्तं तदनुयोज्यमुच्यते । सामान्योदाहृतेष्वर्थेषु वा विशेषग्रहणार्थं तद्वाक्यमनुयोज्यम् । यथा संशोधनसाध्योऽयं व्याधिरित्युक्ते किं वमनसाध्यः किं विरेचनसाध्य इत्यनुयुज्यते ॥ ५१ ॥

अथाननुयोज्यम् । अननुयोज्यं नामातो विपर्ययेण यथायमसाध्यः ॥ ५२ ॥

अथानुयोगः । अनुयोगो नाम यत्तद्विद्यानां तद्विद्यैरेव सार्धं तन्त्रे तन्त्रैकदेशे वा प्रश्नः प्रश्नैकदेशो वा ज्ञानविज्ञानवचनपरीक्षार्थमादिश्यते । अथवा नित्यः पुरुष इति प्रतिज्ञाते यत्परः को हेतुरित्याह सोऽनुयोगः ॥ ५३ ॥

अथ प्रत्यनुयोगो नामानुयोगस्यानुयोगः । यथा अनुयोगस्य पुनः को हेतुरिति ॥ ५४ ॥

अथ वाक्यदोषः । वाक्यदोषो नाम यथा खल्वस्मिन्नर्थे न्यूनमधिकमनर्थकमपार्थकं विरुद्धं चेति ॥५५ ॥

अत्र हेतूदाहरणोपनयनिगमनानामन्यतमेनापि न्यूनं न्यूनं

भवति । यद्वा बहूपदिष्टहेतुकमेकेन साध्यते हेतुना तच्च न्यूनम् । एतानि ह्यन्तरेण प्रकृतोऽप्यर्थः प्रणश्येत् ॥ ५६ ॥

अथाधिक्यम् । आधिक्यं नाम यदायुर्वेदे भाष्यमाणे बार्हस्पत्यमौशनसमन्यद्वा प्रतिसंबद्धार्थमुच्यते । यद्वा पुनः प्रतिसंबद्धार्थमपि द्विरभिधीयते, तत्पुनरुक्तत्वादधिकम्, तच्च पुनरुक्तं द्विविधम् । अर्थपुनरुक्तं शब्दपुनरुक्तं च । तत्रार्थपुनरुक्तं नाम यथा भेषजमौषधं साधनमिति, शब्दपुनरुक्तं च भेषजं भेषजमिति ॥ ५७ ॥

अनर्थकं नाम यद्वचनमक्षरग्राममात्रमेव स्यात्पञ्चवर्गवन्न चार्थतो गृह्यते ॥ ५८ ॥

अपार्थकं नाम यदर्थवच्च परस्परेण चायुज्यमानार्थम् । यथा तक्रनक्रवंशवज्रनिशाकरा इति ॥ ५९ ॥

विरुद्धं नाम यद्दृष्टान्तसिद्धान्तसमयैर्विरुद्धम् । तत्र पूर्वं दृष्टान्तसिद्धान्तावुक्तौ । समयः पुनस्त्रिधा भवति, यथायुर्वैदिकसमयो याज्ञियसमयो मोक्षशास्त्रिकसमय इति । तत्रायुर्वैदिकसमयश्चतुष्पादसिद्धिः । आलभ्या यजमानैः पशव इति याज्ञियसमयः । सर्वभूतेष्वहिंसेति मोक्षशास्त्रिकसमयः । तत्र स्वसमयविपरीतमुच्यमानं विरुद्धमिति वाक्यदोषाः ॥ ६० ॥

वाक्यप्रशंसा नाम यथा अन्यूनमनधिकमर्थवदनपार्थकमविरुद्धमधिगतपदार्थं च तद्वाक्यमननुयोज्यमिति प्रशस्यते ॥ ६१ ॥

छलं नाम परिशठमर्थाभासमनर्थकं वाग्वस्तुमात्रमेव । तद्द्विविधं वाक्छलं सामान्यच्छलं च । तत्र वाक्छलं नाम यथा कश्चिद्ब्रूयान्नवतन्त्रोऽयं भिषगिति, भिषग्ब्रूयान्नाहं नवतन्त्र एकतन्त्रोऽहमिति । परो ब्रूयान्नाहं ब्रवीमि नवतन्त्राणि तवेति, अथ तु नवाभ्यस्तं ते तन्त्रमिति, भिषग्ब्रूयान्न मया नवाभ्यस्तं तन्त्रमनेकशताभ्यस्तं मया तन्त्रमिति वाक्छलम् ॥ ६२ ॥

सामान्यच्छलं नाम यथा व्याधिप्रशमनायौषधमित्युक्ते परो ब्रूयात् सत् सत्प्रशमनायेति किंनु भवानाह सद्रोगः सदौषधं यदि च सत् सत्प्रशमनाय भवति तत्र सत्कासः सत्क्षयः सत्सामान्यात्कासः क्षयप्रशमनाय भविष्यतीति एतत्सामान्यच्छलम् ॥ ६३ ॥

अहेतुर्नाम प्रकरणसमः संशयसमो वर्ण्यसम इति । तत्र प्रकरणसमो नामाहेतुर्यथान्यः शरीरादात्मा नित्य इति पक्षे परो ब्रूयाच्छरीरादन्य आत्मा तस्मान्नित्यः शरीरमनित्यमतो विधर्मिणानेन च भवितव्यम् । एष चाहेतुर्न हि य एव पक्षः स हेतुः ॥ ६४ ॥

संशयसमो नामाहेतुर्य एव संशयहेतुः स एव संशयच्छेदहेतुः । यथा अयमायुर्वेदैकदेशमाह किमन्वयं चिकित्सकः स्यान्नवेति संशये परो ब्रूयाद्यस्मादयमायुर्वेदैकदेशमाह तस्माच्चिकित्सकोऽयमिति । न च संशयस्थे हेतुं विशेषयत्येष चाहेतुः । न हि य एव संशयहेतुः स एव संशयच्छेदहेतुः ॥ ६५ ॥

वर्ण्यसमो नामाहेतुर्यो हेतुर्वर्ण्याविशिष्टः । यथा परो ब्रूयात् अस्पर्शत्वाद्बुद्धिरनित्या शब्दवदिति । तत्र वर्ण्यः शब्दो बुद्धिरपि वर्ण्या तदुभयवर्ण्याविशिष्टत्वाद्वर्ण्यसमोऽप्यहेतुः ॥ ६६ ॥

अतीतकालम् । अतीतकालं नाम यत्पूर्वं वाच्यं तत्पश्चादुच्यते तत्कालातीतत्वादग्राह्यं भवति परं वा निग्रहप्राप्तमनिगृह्य परिगृह्य पक्षान्तरितं पश्चान्निगृहीते तत्तस्यातीतकालत्वान्निग्रहवचनसमर्थं भवतीति ॥ ६७ ॥

उपालम्भो नाम हेतोर्दोषवचनम् । यथा पूर्वमहेतवो हेत्वाभासा व्याख्याताः ॥ ६८ ॥

परिहारो नाम तस्यैव दोषवचनस्य परिहरणम् । यथा नित्यमात्मनि शरीरस्थे जीवलिङ्गान्युपलभ्यन्ते, तस्य चापगमान्नोपलभ्यन्ते, तस्मादन्यः शरीरादात्मा नित्यः शरीराच्चेति ॥ ६९ ॥

प्रतिज्ञाहानिः । प्रतिज्ञाहानिर्नाम यः पूर्वप्रतिगृहीतां प्रतिज्ञां पर्यनुयुक्तः परित्यजति । यथा प्राक् प्रतिज्ञां कृत्वा नित्यः पुरुष इति पर्यनुयुक्तस्त्वाहानित्य इति ॥ ७० ॥

अभ्यनुज्ञा नाम य इष्टानिष्टाभ्युपगमः ॥ ७१ ॥

हेत्वन्तरं नाम प्रकृतहेतौ वाच्ये यद्विकारहेतुमाह ॥ ७२ ॥

अर्थान्तरं नाम ज्वरलक्षणे वाच्ये प्रमेहलक्षणमाह ॥ ७३ ॥

निग्रहस्थानं नाम पराजयप्राप्तिः । तच्च निरुक्तस्य वाक्यस्याविज्ञानं परिषदि विज्ञानवत्याम् ॥ ७४ ॥

यद्वा अननुयोज्यस्यानुयोगः अनुयोज्यस्य चाननुयोगः प्रतिज्ञाहानिरभ्यनुज्ञाकालातीतवचनमहेतुः न्यूनमतिरिक्तं व्यर्थमनर्थकं पुनरुक्तं विरुद्धं हेत्वन्तरमर्थान्तरं निग्रहस्थानमिति वादमर्यादापदानि यथोद्देशमभिनिर्दिष्टानि ॥ ७५ ॥

वादस्तु खलु भिषजां वर्तमानो वर्तेतायुर्वेद एव नान्यत्र ॥७६॥

तत्र हि वाक्यप्रतिवाक्यविस्ताराः केवलाश्चोपपत्तयश्च सर्वाधिकरणेषु ताः सर्वाः सम्यगवेक्ष्यावेक्ष्य सर्वं वाक्यं ब्रूयान्नाप्रकृतिकमशास्त्रमपरीक्षितमसाधकमाकुलमज्ञापकं वा सर्वं च हेतुमद्ब्रूयात् हेतुमन्तो ह्यकलुषाः सर्व एव वादविग्रहाश्चिकित्सिते कारणभूताः । प्रशस्तबुद्धिवर्धकत्वात्सर्वारम्भसिद्धिं ह्यावहत्यनुपहता बुद्धिः ॥७७॥

इमानि खलु तावदिह कानिचित्प्रकरणानि ब्रूमः । ज्ञानपूर्वकं कर्मणां समारम्भं प्रशंसन्ति कुशलाः ॥ ७८ ॥

ज्ञात्वा हि कारणकरणकार्ययोनिकार्यकार्यफलानुबन्धदेशकालप्रवृत्त्युपायान्सम्यगभिनिर्वर्त्यमानः कार्याभिनिर्वृत्तौ इष्टफलानुबन्धकं कार्यमभिनिर्वर्तयत्यनतिमहता प्रयत्नेन कर्ता ॥७९ ॥

तत्र कारणं नाम तद्यत्करोति स एव हेतुः कर्ता सः ॥ ८० ॥

करणं पुनस्तद्यदुपकरणायोपकल्पते कर्तुः कार्याभिनिर्वृत्तौ प्रयतमानस्य ॥ ८१ ॥

कार्ययोनिस्तु सा या विक्रियमाणा कार्यत्वमापद्यते ॥ ८२ ॥

कार्यं तु तद्यस्याभिनिर्वृत्तिमभिसंधाय प्रवर्तते कर्ता ॥ ८३ ॥

कार्यफलं पुनस्तद्यत्प्रयोजना कार्याभिनिर्वृत्तिरिष्यते ॥ ८४ ॥

अनुबन्धस्तु कर्तारमवश्यमनुबध्नाति कार्यादुत्तरकालं कार्यनिमित्तः शुभो वाप्यशुभो वा भावः ॥ ८५ ॥

देशस्त्वधिष्ठानम् ॥ ८६ ॥

कालः पुनः परिणामः ॥ ८७ ॥

प्रवृत्तिस्तु खलु चेष्टा कार्यार्था सैव क्रिया कर्म यत्नः कार्यसमारम्भश्च ॥ ८८ ॥

उपायाः पुनः कारणादीनां सौष्ठवमभिसन्धानं च सम्यक् कार्यकार्यफलानुबन्धोपायवर्ज्यानां कार्याणामभिनिर्वर्तक इत्यतो-

ऽभ्युपायः कृतेनोपायार्थोऽस्ति न च विद्यते तदात्वे कृताच्चोत्तर-कालं फलं फलाच्चानुबन्ध इति व्याख्यातं दशविधम् ॥ ८९ ॥

अग्रेपरीक्ष्यं ततोऽनन्तरं कार्यार्था प्रवृत्तिरिष्टा । तस्माद्भिषक् कार्यं चिकीर्षुः प्राक्कार्यसमारम्भात्परीक्षया केवलं परीक्ष्यं परीक्ष्यार्थकर्म समारभेत कर्तुम् ॥ ९० ॥

तत्र चेद्भिषगभिषग्वा भिषजं कश्चित्पृच्छेद्वमनविरेचनास्थापनानुवासनशिरोविरेचनानि प्रयोक्तुकामेन भिषजा कतिविधया परीक्षया कतिविधमेव परीक्ष्यं कश्चात्र परीक्ष्यविशेषः कथं च परीक्षितव्यं किंप्रयोजना च परीक्षा क्व च वमनादीनां प्रवृत्तिः क्व च निवृत्तिः प्रवृत्तिनिवृत्तिसंयोगे च किं नैष्ठिकं कानि च वमनादीनां भेषजद्रव्याण्युपयोगं गच्छन्तीति । स एवं पृष्टो यदि मोहयितुमिच्छेत् ब्रूयादेनं बहुविधा हि परीक्षा तथा परीक्ष्यविधिभेदः । कतमेन विधिभेदप्रकृत्यन्तरेण परीक्ष्यस्य भिन्नस्य भेदाग्रं भवान्पृच्छति आख्यायमानं नेदानीं भवतोऽन्येन विधिभेदप्रकृत्यन्तरेण भिन्नया परीक्षया अन्येन वा विधिभेदप्रकृत्यन्तरेण परीक्ष्यस्य भिन्नस्याभिलषितमर्थं श्रोतुमहमन्येन परीक्षाविधिभेदेन अन्येन वा विधिभेदप्रकृत्यन्तरेण परीक्ष्यं भित्त्वार्थमाचक्षाण इच्छां प्रपूरयेयमिति ॥ ९१ ॥

स यदुत्तरं ब्रूयात्तत्परीक्ष्योत्तरं वाच्यं स्याद् यथोक्तं प्रतिवचनमवेक्ष्य सम्यग्यदि तु ब्रूयात् न चैनं मोहयितुमिच्छेत् प्राप्तं तु वचनकालं मन्येत काममस्मै ब्रूयादाप्तमेव निखिलेन ॥ ९२ ॥

द्विविधा परीक्षा ज्ञानवतां प्रत्यक्षमनुमानं च । एतत् तु द्वयमुपदेशश्च परीक्षात्रयम् । एवमेषा द्विविधा परीक्षा त्रिविधा वा सहोपदेशेन ॥ ९३ ॥

दशविधं तु परीक्ष्यं कारणादि यदुक्तमग्रे तदिह भिषगादिषु संसार्य संदर्शयिष्यामः, इह कार्यप्राप्तौ कारणं भिषक्, करणं पुनर्भेषजं, कार्ययोनिर्धातुवैषम्यं, कार्यं धातुसाम्यं, कार्यफलं सुखावाप्तिः, अनुबन्ध आयुः, देशो भूमिरातुरश्च, कालः संवत्सरश्चातुरावस्था च, प्रवृत्तिः प्रतिकर्मसमारम्भः, उपायो भिषगादीनां

सौष्ठवमभिसंधानं च सम्यगिहाप्यस्योपायस्य विषयः पूर्वेणैवोपायविशेषेण व्याख्यात इति कारणादीनि दश। दशसु भिषगादिषु संसार्य संदर्शितानि, तथैवानुपूर्व्या एतद्दशविधं परीक्ष्यमुक्तं च ॥ ९४ ॥

तस्य यो यो परीक्ष्य विशेषो यथा यथा च परीक्षितव्यः स स तथा तथा व्याख्यास्यते। कारणं भिषगित्युक्तमग्रे तस्य परीक्षा भिषक् नाम स यो भेषति यः सूत्रार्थप्रयोगकुशलः यस्य चायुः सर्वथा विदितम् ॥ ९५ ॥

यथावत्सर्वधातुसाम्यं चिकीर्षन्नात्मानमेवादितः परीक्षेत। गुणिषु गुणतः कार्याभिनिर्वृत्तिं पश्यन् कच्चिदहमस्य कार्यस्याभिनिर्वर्तने समर्थो न वेति ॥ ९६ ॥

तत्रेमे भिषग्गुणा यैरुपपन्नो भिषग् धातुसाम्याभिनिर्वर्तने समर्थो भवति। तद्यथा, पर्यवदातश्रुतता परिदृष्टकर्मता दाक्ष्यं शौचं जितहस्तता उपकरणवत्ता सर्वेन्द्रियोपपन्नता प्रकृतिज्ञता प्रतिपत्तिज्ञता चेति ॥ ९७ ॥

करणं पुनर्भेषजम् । भेषजं नाम तद्यदुपकरणायोपकल्प्यते, भिषजो धातुसाम्याभिनिर्वृत्तौ प्रयतमानस्य, विशेषतश्चोपायान्तरेभ्यः। तद्द्विविधं व्यपाश्रयभेदात्, दैवव्यपाश्रयं युक्तिव्यपाश्रयं च। तत्र दैवव्यपाश्रयं मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोपवासदानस्वस्त्ययनप्रणिपातगमनादि । युक्तिव्यपाश्रयं संशोधनोपशमने चेष्टाश्च दृष्टफलाः । एतच्चैव भेषजमङ्गभेदादपि द्विविधं द्रव्यभूतमद्रव्यभूतं च। तत्र यद् द्रव्यभूतं तदुपायाभिप्लुतम् । उपायो नाम भयदर्शनविस्मापनक्षोभणहर्षणभर्त्सनवधबन्धस्वप्नसंवाहनादिरमूर्तो भावो यथोक्ताः सिद्ध्युपायाश्च। यत्तु द्रव्यभूतं तद्वमनादिषु योगमुपैति ॥ ९८ ॥

तस्यापीयं परीक्षा, इदमेवं प्रकृत्या एवंगुणमेवंप्रभावमस्मिन्देशे जातमस्मिन्नृतौ एवं गृहीतमेवं निहितमेवमुपस्कृतमनया मात्रया युक्तमस्मिन्रोगे एवंविधस्य पुरुषस्यैतावन्तं दोषमपकर्षयति

उपशमयति वान्यदपि चैवंविधं भेषजं भवेत्तानेनान्येन वा विशेषेण युक्तमिति ॥ ९९ ॥

कार्ययोनिर्धातुवैषम्यं तस्य लक्षणं विकारागमः, परीक्षा त्वस्य विकारप्रकृतेश्चैवोनातिरिक्तलिङ्गविशेषावेक्षणं विकारस्य च साध्यासाध्यमृदुदारुणलिङ्गविशेषावेक्षणमिति ॥ १०० ॥

कार्यं धातुसाम्यं, तस्य लक्षणं विकारोपशमः, परीक्षा त्वस्य रुगुपशमनं स्वरवर्णयोगः शरीरोपचयः बलवृद्धिरभ्यवहार्याभिलाषो रुचिराहारकालेऽभ्यवहृतस्य चाहृतस्य चाहारस्य सम्यग्जरणं निद्रालाभो यथाकालं वैकारिकाणां स्वप्नानामदर्शनं सुखेन च प्रतिबोधनं वातमूत्रपुरीषरेतसां मुक्तिः। सर्वाकारैर्मनोबुद्धीन्द्रियाणां चाव्यापत्तिरिति ॥ १०१ ॥

कार्यफलं सुखावाप्तिस्तस्य लक्षणं मनोबुद्धीन्द्रियशरीरतुष्टिः॥१०२

अनुबन्धस्तु खलु आयुस्तस्य लक्षणं प्राणैः संयोगः ॥ १०३ ॥

देशस्तु भूमिरातुरश्च, तत्र भूमिपरीक्षा आतुरस्य परिज्ञानहेतोर्वा स्यादौषधपरिज्ञानहेतोर्वा। तत्र तावदियमातुरपरिज्ञानहेतोः। तद्यथा—अयं कस्मिन्भूमिदेशे जातः संवृद्धो व्याधितो वेति तस्मिंश्च भूमिदेशे मनुष्याणामिदमाहारजातमिदं विहारजातमेतद्बलमेवंविधं सत्त्वमेवंविधं सात्म्यमेवंविधो दोषो भक्तिरियमिमे व्याधयो हितमिदमहितमिदमिति प्रायोग्रहणेन ॥ १०४ ॥

औषधपरिज्ञानहेतोस्तु कल्पेषु भूमिपरीक्षा वक्ष्यते ॥ १०५ ॥

आतुरस्तु खलु कार्यदेशस्तस्य परीक्षा आयुषः प्रमाणज्ञानहेतोर्वा स्याद्बलदोषप्रमाणज्ञानहेतोर्वा ॥ १०६ ॥

तत्र तावदियं बलदोषविशेषप्रमाणापेक्षा सहसा ह्यतिबलमौषधमपरीक्षकप्रयुक्तमल्पबलमातुरमभिघातयेत्, न ह्यतिबलान्याग्नेयसौम्यवायवीयान्यौषधान्यग्निक्षारशस्त्रकर्माणि वा शक्यन्तेऽल्पबलैः सोढुमविषह्यातितीक्ष्णवेगत्वाद्धि सद्यः प्राणहराणि स्युः ॥ १०७ ॥

एतच्चैव कारणमवेक्ष्यमाणा हीनबलमातुरमविषादकरैर्मृदुसुकुमारप्रायैरुत्तरोत्तरगुरुभिरविभ्रमैरनात्ययिकैश्चोपचरन्त्यौषधैः विशे-

परिपक्वगर्भशल्यायाः पुनर्विमुक्तगर्भशल्यायास्तदहरेव स्नेहोपचारः स्यात् ॥ ६८ ॥

परमतो निर्विकारमाप्यायमानस्य गर्भस्य मासे मासे कर्मोपदेक्ष्यामः ॥ ६९ ॥

प्रथमे मासे शङ्किता चेद्गर्भमापन्ना क्षीरमनुपस्कृतं मात्रावच्छीतं काले पिबेत्सात्म्यं च भोजनं सायं प्रातश्च भुञ्जीत ॥ ७० ॥

द्वितीये मासे क्षीरमेव च मधुरौषधसिद्धम् । तृतीये मासे क्षीरं मधुसर्पिर्भ्यामुपसंसृज्य । चतुर्थे मासे तु क्षीरनवनीतमक्षमात्रमश्नीयात् । पञ्चमे मासे क्षीरसर्पिः । षष्ठे मासे क्षीरसर्पिर्मधुरौषधसिद्धं । तदेव सप्तमे मासे ॥ ७१ ॥

तत्र गर्भस्य केशा जायमाना मातुर्विदाहं जनयन्तीति स्त्रियो भाषन्ते तन्नेति भगवानात्रेयः । किंतु गर्भोत्पीडनाद्वातपित्तश्लेष्माण उरः प्राप्य विदहन्ति ततः कण्डूरुपजायते कण्डूमूला च किक्काशावाप्तिर्भवति । तत्र कोलोदकेन नवनीतस्य मधुरौषधसिद्धस्य पाणितलमात्रं कालेऽस्यै दद्यात् । चन्दनमृणालकल्कैश्चास्याः स्तनोदरं विमृद्नीयात् । शिरीषधातकीसर्षपमधुकचूर्णैः कुटजार्जकबीजमुस्तहरिद्राकल्कैर्वा निम्बकोलसुरसमञ्जिष्ठाकल्कैर्वा । पृषद्धरिणशशरुधिरयुतया त्रिफलया वा करवीरकपत्रसिद्धेन वा तैलेनाभ्यङ्गः । परिषेकः पुनर्मालतीमधुकसिद्धेनाम्भसाजातकण्डूया च कण्डूयनं वर्जयेत्त्वग्भेदनवैरूप्यपरिहारार्थम् । अशक्यायां तु कण्डूामुन्मर्दनोद्धर्षणाभ्यां परिहारः स्यात् । मधुरमाहारजातं वातहरमल्पमल्पस्नेहलवणमल्पोदकानुपानं च भुञ्जीत ॥ ७२ ॥

अष्टमे तु मासे क्षीरयवागूं सर्पिष्मतीं काले काले पिबेत् । तन्नेति भद्रकाप्यः, पैङ्गल्याबाधो ह्यस्या गर्भमागच्छेदिति । अस्त्वत्र पैङ्गल्याबाध इत्याह भगवान्पुनर्वसुरात्रेयो न ह्येतदकार्यं एवं कुर्वती ह्यारोग्यबलवर्णस्वरसंहननसंपदुपेतं ज्ञातीनामपि श्रेष्ठमपत्यं जनयति ॥ ७३ ॥

नवमे तु खल्वेनां मासे मधुरौषधसिद्धेन तैलेनानुवासयेत् । अतश्चास्यास्तैलं पिचुमिश्रं योनौ प्रणयेद्गर्भस्थानमार्गस्नेहनार्थम् ७४

यदिदं कर्म प्रथममासमुपादायोपदिष्टमा नवमान्मासात्। तेन गर्भिण्या गर्भसमये गर्भधारणे कुक्षिकटीपार्श्वपृष्ठं मृदु भवति वातश्चानुलोमः संपद्यते मूत्रपुरीषे च प्रकृतिभूते सुखेन मार्गमनुपद्येते चर्मनखानि च मार्दवमुपयान्ति बलवर्णौ चोपचीयेते पुत्रं चेष्टं संपदुपेतं सुखिनं सुखेनैषा कालेन प्रजायत इति ॥ ७५ ॥

प्राक्चैवास्या नवमान्मासात्सूतिकागारं कारयेदपहृतास्थिशर्करा-कपाले देशं प्रशस्तरूपरसगन्धायां भूमौ प्राग्द्वारमुदग्द्वारं वा॥७६॥

तत्र बैल्वानां काष्ठानां तिन्दुकैङ्गुदानां भल्लातकानां वारुणानां खदिराणां वा यानि चान्यान्यपि ब्राह्मणाः शंसेयुरथर्ववेदविदस्तद्व-सनालेपनाच्छादनापिधानसंपदुपेतं वास्तु विद्यात् । हृदययोगेनाग्निसलिलोलूखलवर्चःस्थानस्नानभूमिमहानसमृतुसुखं च ॥ ७७ ॥

तत्र सर्पिस्तैलमधुसैन्धवसौवर्चलकाललवणविडङ्गगुडकुष्ठकिलिम-नागरपिप्पलीमूलहस्तिपिप्पलीमण्डूकपर्ण्येलालाङ्गलीवचाचव्यचित्र-कचिरबिल्वहिङ्गुसर्षपलशुनकणकणिकानीपातसीबिल्वजभूर्जाः कुल-त्थमैरेयसुरासवाः सन्निहिताः स्युः ॥ ७८ ॥

तथाश्मानौ द्वौ द्वे चण्डमुसले द्वे उलूखले खरो वृषभश्च द्वौ च तीक्ष्णौ सूचीपिप्पलकौ सौवर्णराजतौ द्वे शस्त्राणि च तीक्ष्णा-यसानि द्वौ च बिल्वमयौ पर्यङ्कौ तैन्दुकैङ्गुदानि च काष्ठानि अग्नि-संधुक्षणानि स्त्रियश्च बह्व्यो बहुशः प्रजाताः सौहार्दयुक्ताः सततम-नुरक्ताः प्रदक्षिणाचाराः प्रतिपत्तिकुशलाः प्रकृतिवत्सलास्त्यक्तवि-षादाः क्लेशसहिष्णवोऽभिमता ब्राह्मणाश्चाथर्ववेदविदो यच्चान्यदपि तत्र समर्थं मन्येत यच्च ब्राह्मणा ब्रूयुः स्त्रियश्च वृद्धास्तत्कार्यम् ॥७९॥

"ततः प्रवृत्ते नवमे मासि पुण्येऽहनि प्रशस्तनक्षत्रयोगमुपगते भगवति शशिनि कल्याणे करणे मैत्रे मुहूर्ते शान्तिं हुत्वा गोब्राह्मणमग्निमुदकं चादौ प्रवेश्य गोभ्यस्तृणोदकं मधुलाजांश्च प्रदाय ब्राह्मणेभ्योऽक्षतान्सुमनसो नान्दीमुखानि च फलानीष्टानि दत्त्वा उदक्पूर्वमासनस्थेभ्योऽभिवाद्य पुनराचम्य स्वस्ति वाचयेत्। ततः पुण्याहशब्देन गोब्राह्मणमन्वावर्तमाना प्रविशेत्सूतिकागारम्। तत्रस्था च प्रसवकालं प्रतीक्षेत ॥ ८० ॥

तस्यास्तु खल्विमानि लिङ्गानि प्रजननकालमभितो भवन्ति। तद्यथा क्लमो गात्राणां ग्लानिराननस्याक्ष्णोः शैथिल्यं विमुक्तबन्धनत्वमिव वक्षसः कुक्षेरवस्रंसनमधो गुरुत्वं वंक्षणबस्तिकटीपार्श्वपृष्ठनिस्तोदो योनेः प्रस्रवणमनन्नाभिलाषश्चेति । ततोऽनन्तरमावीनां प्रादुर्भावः प्रसेकश्च गर्भोदकस्य ॥ ८१ ॥

आवीप्रादुर्भावे तु भूमौ शयनं विदध्यान्मृद्वास्तरणोपपन्नं तदध्यासीनां तां ततः समन्ततः परिवार्य यथोक्तगुणाः स्त्रियः पर्युपासीरन्नाश्वासयन्त्यो वाग्भिर्ग्राहिणीभिरुपदिष्टवदर्थाभिधायिनीभिः ॥ ८२ ॥"

सा चेदावीभिः संक्लिश्यमाना न प्रजायेताथैनां ब्रूयात् उत्तिष्ठ मुसलमन्यतरं च गृह्णीष्वानेनैतदुदूखलं धान्यपूर्णं मुहुर्मुहुरभिजहि मुहुर्मुहुरवजृम्भस्व चंक्रमस्व चान्तरान्तरा इत्येवमुपदिशन्त्येके ॥८३॥

तन्नेत्याह भगवानात्रेयः । "दारुणव्यायामवर्जनं हि गर्भिण्याः सततमुपदिश्यते । विशेषतश्च प्रजननकाले प्रचलितसर्वधातुदोषायाः सुकुमार्या नार्या मुसलव्यायामसमीरितो वायुरन्तरं लब्ध्वा प्राणान्हिंस्याद्दुष्प्रतीकारतमा हि तस्मिन्काले विशेषेण भवति गर्भिणी तस्मान्मुसलग्रहणं परिहार्यमृषयो मन्यन्ते जृम्भणं चङ्क्रमणं च पुनरनुष्ठेयमिति ॥ ८४ ॥"

अथास्यै दद्यात्कुष्ठैलालाङ्गलिकीवचाचित्रकचिरबिल्वचूर्णमुपाघ्रातुं सा तन्मुहुर्मुहुरुपजिघ्रेत् । तथा भूर्जपत्रधूमं शिंशपासारधूमं तस्याश्चान्तरान्तरा । कटीपार्श्वपृष्ठसक्थिदेशादीषदुष्णेन तैलेनाभ्यज्यानुसुखमवमृद्नीयादित्यनेन तु कर्मणा गर्भोऽवाक्प्रतिपद्यते । स यदा जानीयाद्विमुच्य हृदयमुदरमस्यास्त्वाविशति बस्तिशिरोऽवगृह्णाति त्वरयन्ति एनामाव्यः परिवर्तते अस्या अवाग्गर्भ इत्यस्यामवस्थायां पर्यङ्कमेनामारोप्य प्रवाहितमुपक्रमेत कर्णे चास्या मन्त्रमिममनुकूला स्त्री जपेत् ॥ ८५ ॥

क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः ।
सगर्भां त्वां सदा पान्तु वैशल्यं च दिशन्तु ते ॥ ८६ ॥

प्रसुव त्वमविक्लिष्टमविक्लिष्टा शुभानने ।
कार्तिकेयद्युतिं पुत्रं कार्तिकेयाभिरक्षितम्" इति ॥ ८७ ॥

ताश्चैनां यथोक्तगुणाः स्त्रियोऽनुशिष्युरनागतावीर्मा प्रवाहिष्ठाः या ह्यनागतावीः प्रवाहयते व्यर्थमेवास्यास्तत्कर्म भवति । प्रजा चास्या विकृतिमापन्ना च श्वासकासशोषप्लीहप्रसक्ता वा भवति । यथा हि क्षवथूद्गारवातमूत्रपुरीषवेगान्प्रयतमानोऽप्यप्राप्तकालान्न लभते कृच्छ्रेण व्याप्य वाप्नोति तथानागतकालं गर्भमपि प्रवाहमाणा यथा चैषामेव क्षवथ्वादीनां संधारणमुपघातायोपपद्यते तथा प्राप्तकालस्य गर्भस्याप्रवहणमिति । सा यथानिर्देशं कुरुष्वेति वक्तव्या स्यात् । तथा च कुर्वती शनैः शनैः पूर्वं प्रवाहेत ततोऽनन्तरं बलवत्तरमिति तस्यां च प्रवाहमाणायां स्त्रियः शब्दं कुर्युः प्रजाता प्रजाता धन्यं धन्यं पुत्रमिति तथास्या हर्षेणाप्यायन्ते प्राणाः ॥ ८८ ॥

यदा च प्रजाता स्यात्तदैनामवेक्षेत काचिदस्या अमरा प्रपन्ना वा प्रपन्ना नेति । तस्याश्चेदमरा न प्रपन्ना स्यादथैनामन्यतमा स्त्री दक्षिणेन पाणिना नाभेरुपरिष्टाद्बलवन्निपीड्य सव्येन पाणिना पृष्ठत उपसंगृह्य सुनिर्धूतं निर्धुनुयात् । अथास्याः पादपार्ष्ण्या श्रोणीमाकोटयेदस्याः स्फिचावुपसंगृह्य सुपीडितं पीडयेत् । अथास्या बालवेण्या कण्ठताल्‌ परिमृशेत् ॥ ८९ ॥

भूर्जपत्रकाचमणिसर्पनिर्मोकैश्चास्या योनिं धूपयेत् । कुष्ठतालीशकल्कं बल्वजयूषे मैरेयसुरामण्डे वा कौलत्थे वा मण्डूकपर्णिपिप्पलीक्वाथे वा संप्लाव्य पाययेदेनाम् ॥ ९० ॥

तथा सूक्ष्मैलाकिलिमकुष्ठनागरविडङ्गकालविड्चव्यपिप्पलीचित्रकोपकुञ्चिकाकल्कं खरवृषभस्य जरतो वा दक्षिणं कर्णमुत्कृत्त्य दृषदि जर्जरीकृत्य बल्वजयूषादीनामन्यतममस्मिन्प्रक्षिप्य मुहूर्तस्थितमुद्धृत्य तदाप्लावनं पाययेदेनाम् ॥ ९१ ॥

शतपुष्पाकुष्ठमदनहिङ्गुसिद्धस्य चैनां तैलस्य पिचुं ग्राहयेत् । अतश्चैवानुवासयेदेतैरेव चाप्लावनैः फलजीमूतकेक्ष्वाकुधामार्गवकुटजकृतवेधनहस्तिपर्ण्युपहितैरास्थापयेत् ॥ ९२ ॥

तदास्थापनमस्या हि सह वातमूत्रपुरीषैर्निर्हरत्यमरामासक्तां

वायोरनुलोमगमनात् । अमरं हि वातमूत्रपुरीषाण्यन्यानि चान्तर्बहिर्मुखानि सृजन्ति ॥ ९३ ॥

तस्यां तु खल्वमरायाः प्रपतनार्थे खल्वेवमेव कर्मणि क्रियमाणे जातमात्रेऽस्यैव कुमारस्य कार्याण्येतानि कर्माणि भवन्ति । तद्यथा— अश्मनोः संघट्टनं कर्णयोर्मूले शीतोदकेनोष्णोदकेन वा सुखपरिषेकः । तथा संक्लेशविहतान्प्राणान्पुनर्लभेत कृष्णकपालिका शूर्पेण चैनमभिनिष्पुणीयाद्यच्चेष्टं स्याद्यावत्प्राणानां प्रत्यागमनात्तत्तत्सर्वमेव कुर्युः ॥ ९४ ॥

ततः प्रत्यागतप्राणं प्रकृतिभूतमभिसमीक्ष्य स्नानोदकग्रहणाभ्यामुपपादयेत् । अथास्य ताल्वोष्ठकण्ठजिह्वाप्रमार्जनमारभेताङ्गुल्या सुपरिलिखितनखया सुप्रक्षालितोपधानकार्पासपिचुमत्या प्रथमं प्रमार्जितस्यास्य च शिरस्तालु कार्पासपिचुना स्नेहगर्भेण प्रतिच्छादयेत् । ततोऽस्यानन्तरं कार्यं सैन्धवोपहितेन सर्पिषा प्रच्छर्दनम् ९५

नाड्यास्तस्याः कल्पनविधिमुपदेक्ष्यामः । नाभिबन्धनात्प्रभृति हित्वाष्टाङ्गुलमभिज्ञानं कृत्वा छेदनावकाशस्य द्वयोरन्तरयोः शनैर्गृहीत्वा तीक्ष्णेन रौक्मराजतायसानां छेदनानामन्यतमेनोर्ध्वधारेण छेदयेत्तामग्रे सूत्रेणोपनिबध्य कण्ठे चास्य शिथिलमवसृजेत् ॥९६॥

तस्य चेन्नाभिः पच्येत्तां लोध्रमधुकप्रियङ्गुदारुहरिद्राकल्कसिद्धेन तैलेनाभ्यज्यादेषामेव तैलौषधानां चूर्णेनावचूर्णयेदेष नाडीकल्पनविधिरुक्तः सम्यक् ॥ ९७ ॥

असम्यक्कल्पेन हि नाड्या आयामव्यायामोतुण्डितपिण्डालिकाविनामिकाविजृम्भिकाबाधेभ्यो भयम् ॥ ९८ ॥

तत्राविदाहिभिर्वातपित्तप्रशमनैरभ्यङ्गोत्सादनपरिषेकैः सर्पिर्भिश्चोपक्रमेत गुरुलाघवमभिसमीक्ष्य कुमारस्य ॥ ९९ ॥

प्रागतो जातकर्म कार्यं ततो मधुसर्पिषी मन्त्रोपमन्त्रिते यथान्यायं प्राशितुमस्मै दद्यात् । स्तनमत ऊर्ध्वमनेनैव विधिना दक्षिणं पातुं पुरस्तात्प्रयच्छेत् । अथातः शीर्षतः स्थापयेदुदकुम्भं मन्त्रोपमन्त्रितम् ॥ १०० ॥

अथास्य रक्षां विदध्यादादानीखदिरकर्कन्धुपीलुपरूपकशाखा-

भिरस्या गृहं भिषक्समन्ततः परिवारयेत्। सर्वतश्च सूतिकागारस्य सर्षपातसीतण्डुलकणकणिकाः प्रकिरेत्। तथा तण्डुलबलिमङ्गलहोमः सततमुभयकालं क्रियते प्राङ्नामकर्मणोर्द्वारे च मुसलमनुतिरश्चीनं न्यस्तं कुर्यात्। वचाकुष्ठक्षौमकहिङ्गुसर्षपातसीलशुनकणकणिकानां रक्षोघ्नसमाख्यातानां च औषधीनां पोट्टलिकां बद्ध्वा सूतिकागारस्योत्तरदेहल्यामासृजेत्। तथा सूतिकायाः कण्ठे सपुत्रायाः स्थाल्युदककुम्भपर्यङ्केष्वपि तथैव च द्वयोर्द्वारपक्षयोः सकणकुम्भकेन्धनाग्निस्तिन्दुककाष्ठेन्धनश्चाग्निः सूतिकागारस्याभ्यन्तरतो नित्यं स्यात्। स्त्रियश्चैनां यथोक्तगुणाः सुहृदश्चानुजागृयुर्दशाहं द्वादशाहं वानुपरतप्रदानमङ्गलाशीःस्तुतिगीतवादित्रमन्नपानविशदमनुरक्तप्रहृष्टजनसंपूर्णं तद्वेश्म कार्यम्। ब्राह्मणश्चाथर्ववेदवित्सततमुभयकालं शान्तिं जुहुयात्स्वस्त्ययनार्थं सुकुमारस्य तथा सूतिकाया इत्येतद्रक्षाविधानमुक्तम् ॥ १०१ ॥

सूतिकां तु खलु बुभुक्षितां विदित्वा स्नेहं पाययेत्प्रथमं परमया शक्त्या सर्पिस्तैलं वसां मज्जानं वा सात्म्यभावमभिसमीक्ष्य भिषक्। पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरचूर्णसहितं स्नेहं पीतवत्याश्च सर्पिस्तैलाभ्यामभ्यज्य वेष्टयेदुदरं महता वाससा तथा तस्या न वायुरुदरे विकृतिमुत्पादयत्यनवकाशत्वात्। जीर्णे तु स्नेहे पिप्पल्यादिभिरेव सिद्धां यवागूं सुस्निग्धां द्रवां मात्रशः पाययेतोभयकालं चोष्णोदकेन परिषेचयेत्प्राक्स्नेहयवागूपानाभ्याम्। एवं पञ्चरात्रं सप्तरात्रं चानुपाल्य ततः क्रमेणाप्याययेत्स्वस्थवृत्तमेतत्सूतिकायाः ॥ १०२ ॥

तस्यास्तु खलु यो व्याधिरुत्पद्यते स कृच्छ्रसाध्यो भवत्यसाध्यो वा। गर्भवृद्धिक्षयितशिथिलसर्वशरीरधातुत्वात्प्रवाहणवेदनाक्लेदनरक्तनिःस्रुतिविशेषशून्यशरीरत्वाच्च। तस्मात्तां यथोक्तेन विधिनोपचरेत् भौतिकजीवनीयबृंहणीयमधुरवातहरसिद्धैरभ्यङ्गोत्सादनपरिषेकावगाहनान्नपानविधिभिर्विशेषतश्चोपचरेत्। विशेषतो हि शून्यशरीराः स्त्रियः प्रजाता भवन्ति ॥ १०३ ॥

दशम्यां निश्यतीतायां सपुत्रा स्त्री सर्वगन्धौषधैर्गौरसर्षपलो-

पाने स्नाता लघ्वहतवस्त्रं परिधाय पवित्रेष्टलघुविचित्रभूषणवती संस्पृश्य मङ्गलान्युचितामर्चयित्वा च देवतां शिखिनः शुक्लवाससो व्यङ्गांश्च ब्राह्मणात्स्वस्ति वाचयित्वा कुमारमहतेन शुचिवाससाच्छादयेत् । प्राक्शिरसमुदक्शिरसं वा संवेश्य देवतापूर्वं द्विजातिभ्यः प्रणमतीत्युक्त्वा कुमारस्य पिता द्वे नामनी कारयेन्नाक्षत्रिकं नामाभिप्रायिकं च । तत्राभिप्रायिकं नाम घोषवदाद्यन्तस्थान्तमूष्मान्तं च वृद्धं त्रिपुरुषान्तरमनवप्रतिष्ठितम् । नाक्षत्रिकं तु नक्षत्रदेवतासंयुक्तं कृतं द्व्यक्षरं चतुरक्षरं वा ॥ १०४ ॥

कृते च नामकर्मणि कुमारं परीक्षितुमुपक्रामेदायुषः प्रमाणज्ञानहेतोः । तत्रेमान्यायुष्मतां कुमाराणां लक्षणानि भवन्ति । तद्यथा—एकैकजा मृदवोऽल्पाः स्निग्धाः सुबद्धमूलाः कृष्णाः केशाः प्रशस्यन्ते । स्थिरा बहला त्वक् प्रकृत्याकृतिसुसम्पन्नमीषत्प्रमाणातिरिक्तमनुरूपमातपत्रोपमं शिरः प्रशस्यते । व्यूढं दृढं समं सुश्लिष्टशङ्खसन्ध्यूर्ध्वव्यञ्जनमुपचितं बलिनमर्धचन्द्राकृति ललाटं बहलौ विपुलसमपीठौ समौ नीचौ वृद्धौ पृष्ठतोऽवनतौ सुश्लिष्टकर्णपुटकौ महाच्छिद्रौ कर्णौ ईषत्प्रलम्बिन्यावसङ्गते समे संहते महत्यौ भ्रुवौ । समे समाहितदर्शने व्यक्तभागविभागे बलवती तेजसोपपन्ने स्वाङ्गोपाङ्गे चक्षुषी । ऋज्वी महोच्छ्वासा वंशसंपन्नेषदवनताग्रा नासिका । महदृजुसुनिविष्टदन्तमास्यमायामविस्तारोपपन्ना श्लक्ष्णा तन्वी प्रकृतियुक्ता पाटलवर्णा जिह्वा । श्लक्ष्णं युक्तोपचयमूष्मोपपन्नं रक्तं तालु । महानदीनः स्निग्धोऽनुनादी गम्भीरसमुत्थो धीरः स्वरः । नातिस्थूलौ नातिकृशौ विस्तारोपपन्नावास्यप्रच्छादनौ रक्तावोष्ठौ । महत्यौ हनू वृत्ता नातिमहती ग्रीवा व्यूढमुपचितमुरो दृढं जत्रु पृष्ठवंशश्च । विकृष्टान्तरौ स्तनावंसपातिनी स्थिरे पार्श्वे वृत्तपरिपूर्णायतौ बाहू सक्थिनी अङ्गुलयश्च महदुपचितं पाणिपादम् । स्थिरा वृत्ताः स्निग्धास्ताम्रास्तुङ्गाः कूर्माकाराः करजाः । प्रदक्षिणावर्ता सोत्सङ्गा च नाभिः । नाभ्युरस्त्रिभागहीना समा समुपचितमांसा कटी वृत्तौ स्थिरोपचितमांसौ नात्युन्नतौ नात्यवनतौ स्फिचावनुपूर्ववृत्तावुपचययुक्तावूरू । नात्युपचिते नात्यपचिते एणीपदे

प्रगूढशिरास्थिसन्धी जङ्घे । नात्युपचितौ नात्यपचितौ गुल्फौ पदिष्टगुणौ पादौ कूर्माकारौ । प्रकृतियुक्तानि वातमूत्रपुरीषगुह्यानि तथा स्वप्नजागरणायासस्मितरुदितस्तनग्रहणानि । यच्च किंचिदन्यदप्यनुक्तमस्ति तदपि सर्वं प्रकृतिसंपन्नमिष्टं विपरीतं पुनरनिष्टमिति दीर्घायुर्लक्षणानि ॥ १०५ ॥

## धात्रीपरीक्षा ।

अतो धात्रीपरीक्षामुपदेक्ष्यामः ॥ १०६ ॥

"अथ ब्रूयाद्धात्रीमानयेति समानवर्णां यौवनस्थां निभृतामनातुरामव्यङ्गामव्यसनामविरूपामजुगुप्सितां देशजातीयामक्षुद्रामक्षुद्रकर्मिणीं कुलेजातां वत्सलामरोगजीवद्वत्सां पुंवत्सां दोग्ध्रीमप्रमत्तामशायिनीमनुच्चारशायिनीमनन्तावशायिनीं कुशलोपचारां शुचिमशुचिद्वेषिणीं स्तन्यसंपदुपेतामिति ॥ १०७ ॥

तत्रेयं स्तनसंपत् नात्यूर्ध्वौ नातिलम्बावनतिकृशावनतिपीनौ युक्तपिप्पलकौ सुखप्रपानौ चेति स्तनसंपत् ॥ १०८ ॥

स्तन्यसंपत्तु प्रकृतिवर्णगन्धरसस्पर्शमुदपात्रे च दुह्यमानं दुग्धमुदकं व्येति प्रकृतिभूतत्वात्तत्पुष्टिकरमारोग्यकरं चेति स्तन्यसंपत् । अतोऽन्यथा व्यापन्नं ज्ञेयम् ॥ १०९ ॥

तस्य विशेषाः श्यावारुणवर्णं कषायानुरसं विशदमनतिलक्ष्यगन्धं रूक्षं द्रवं फेनिलं लघ्वतृप्तिकरं कर्षणं वातविकाराणां कर्तृ वातोपसृष्टं क्षीरमभिज्ञेयम् ॥ ११० ॥

कृष्णनीलपीतताम्रावभासं तिक्ताम्लकटुकानुरसं कुणपरुधिरगन्धि भृशोष्णं पित्तविकाराणां कर्तृ पित्तोपसृष्टं क्षीरमभिज्ञेयम् ॥

अत्यर्थशुक्लमतिमाधुर्योपपन्नं लवणानुरसं घृततैलवसामज्जगन्धि पिच्छिलं तन्तुमदुदकपात्रेऽवसीदति श्लेष्मविकाराणां कर्तृ श्लेष्मोपसृष्टं क्षीरमभिज्ञेयम् ॥ ११२ ॥

तेषां तु त्रयाणामपि क्षीरदोषाणां प्रकृतिविशेषमभिसमीक्ष्य यथास्वं यथादोषं च वमनविरेचनास्थापनानुवासनानि विभज्य कृतानि प्रशमनाय भवन्ति ॥ ११३ ॥

पानाशनविधिस्तु दुष्टक्षीराया यवगोधूमशालिषष्टिकमुद्गहरेणुककुलत्थसुरासौवीरकतुषोदकमैरेयमेदकलशुनकरञ्जप्रायः स्यात् ॥ ११४॥

क्षीरदोषविशेषांश्चावेक्ष्यावेक्ष्य तत्तद्विधानं कार्यं स्यात् ॥ ११५ ॥

पाठामहौषधसुरदारुमुस्तमुर्वागुडूचीवत्सकफलकिराततिक्तकटुकरोहिणीशारिवाकषायाणां च पानं प्रशस्यते । तथान्येषां तिक्तकषायकटुकमधुराणां द्रव्याणां प्रयोगः । इति क्षीरशोधनान्युक्तानि भवन्ति । क्षीरविकारविशेषानभिसमीक्ष्य मात्राकालं चेति क्षीरविशोधनानि ॥ ११६ ॥

क्षीरजननानि तु मद्यानि सीधुवर्ज्यानि ग्राम्यानूपौदकानि च शाकधान्यमांसानि द्रवमधुराम्लभूयिष्ठाश्चाहाराः क्षीरिण्यश्चौषधयः क्षीरपानं चानायासश्चेति वीरणषष्टिशालिकेक्षुवालिकादर्भकुशकाशगुन्द्रेत्कटमूलकषायाणां च पानमिति क्षीरजननान्युक्तानि ॥ ११७ ॥

धात्री तु यदा स्वादुबहुलशुद्धदुग्धा स्यात्तदा स्नातानुलिप्ता शुक्लवस्त्रं परिधायैन्द्रीं ब्राह्मीं शतवीर्यां सहस्रवीर्यां मोघाममव्यथां शिवामरिष्टां वाट्यपुष्पीं विष्वक्सेनकान्तामिति बिभ्रत्यौषधीः कुमारं प्राङ्मुखं प्रथमं दक्षिणस्तनं पाययेदिति धात्रीकर्म ॥ ११८ ॥

## कुमारागारविधिः ।

अतोऽनन्तरं कुमारागारविधिमनुव्याख्यास्यामः । वास्तुविद्याकुशलः प्रशस्तं रम्यमतमस्कं निवातं प्रवातैकदेशं दृढमपगतश्वापदपशुदंष्ट्रिमूषिकपतङ्गं सुसंविभक्तसलिलोदूखलमूत्रवर्चःस्थानस्नानभूमिमहानसमृतुसुखं यथर्तुशयनासनास्तरणसंपन्नं कुर्यात् । तथा सुविहितरक्षाविधानबलिमङ्गलहोमप्रायश्चित्तं शुचिवृद्धवैद्यानुरक्तजनसंपूर्णमिति कुमारागारविधिः ॥ ११९ ॥

शयनास्तरणप्रावरणानि कुमारस्य मृदुलघुशुचिसुगन्धीनि स्युः । स्वेदमलजन्तुमन्ति मूत्रपुरीषोपसृष्टानि च वर्ज्यानि स्युः ॥ १२० ॥

असति संभवेऽन्येषां तान्येव च सुप्रक्षालितोपधानानि सुधूपितानि सुशुद्धशुष्काण्युपयोगं गच्छेयुः ॥ १२१ ॥

धूपनानि पुनर्वाससां शयनास्तरणप्रावरणानां च यवसर्षपातसी-

हिङ्गुगुग्गुलुवचाचोरकवयःस्थागोलोमीजटिलापलङ्कषाशोकरोहिणी-सर्पनिर्मोकाणि घृतसंप्रयुक्तानि स्युः ॥ १२२ ॥

मणयश्च धारणीयाः कुमारस्य खड्गरुरुगवयवृषभाणां जीवतामेव दक्षिणेभ्यो विषाणेभ्योऽग्राणि गृहीतानि स्युः । मन्त्राद्याश्चौषधयो जीवकर्षभकौ च यान्यप्यन्यानि ब्राह्मणाः प्रशंसेयुः ॥ १२३ ॥

क्रीडनकानि खल्वस्य तु विचित्राणि घोषवन्त्यभिरामाण्यगुरूण्यतीक्ष्णाग्राण्यनास्यप्रवेशीन्यप्राणहराण्यवित्रासनानि स्युः ॥१२४॥

न ह्यस्य वित्रासनं साधु तस्मात्तस्मिन्रुदत्यभुञ्जाने वान्यत्र विधेयतामगच्छति राक्षसपिशाचपूतनाद्यानां नामान्याह्वयतां कुमारस्य वित्रासनार्थं नामग्रहणं न कार्यं स्यात् ॥ १२५ ॥

यदि त्वातुर्यं किंचित्कुमारमागच्छेत्तत्प्रकृतिनिमित्तपूर्वरूपलिङ्गोपशयविशेषैस्तत्त्वतोऽनुबुध्य सर्वविशेषानातुरौषधदेशकालाश्रयानवेक्षमाणश्चिकित्सितुमारभेतैनं मधुरमृदुलघुसुरभिशीतसङ्करं कर्म प्रवर्तयन्नेवं सात्म्या हि कुमारा भवन्ति तथा ते शर्म लभन्तेऽचिराय रोगे त्वरोगवृत्तमातिष्ठेद्देशकालात्मगुणविपर्ययेण वर्तमानः ॥

क्रमेणासात्म्यानि परिवर्त्योपयुञ्जानः सर्वाण्यहितानि वर्जयेत्तथा बलवर्णशरीरायुषां संपदमवाप्नोतीति ॥ १२७ ॥

एवमेनं कुमारमायौवनप्राप्तेर्धर्मार्थकुशलागमनाच्चानुपालयेदिति पुत्राशिषां समृद्धिकरं कर्म व्याख्यातम् । तदाचरन्यथोक्तैर्विधिभिः पूजां यथेष्टं लभतेऽनसूयक इति ॥ १२८ ॥

तत्र श्लोकौ ।

तत्राशिषां कर्म समृद्धिकारकं यदुक्तमेतन्महदर्थसंहितम् ।
तदाचरन्ज्ञो विधिभिर्यथातथं पूजां यथेष्टं लभतेऽनसूयकः ॥१२९॥

शरीरं चिन्त्यते सर्वं दैवमानुषसम्पदा ।
सर्वभावैर्यतस्तस्माच्छारीरं स्थानमुच्यते ॥ १३० ॥

इति चरकसंहितायां शारीरस्थानेऽष्टमोऽध्यायः ॥ ८ ॥

## शारीरस्थानं समाप्तम् ।

# इन्द्रियस्थानम्।

## प्रथमोऽध्यायः।

### अथातो वर्णस्वरीयमध्यायं व्याख्यास्यामः।

इह खलु वर्णश्च स्वरश्च गन्धश्च रसश्च स्पर्शश्च चक्षुश्च श्रोत्रं च घ्राणं च रसनं च स्पर्शनं च सत्त्वं च भक्तिश्च शौचं च शीलं चाचारश्च स्मृतिश्चाकृतिश्च बलं च ग्लानिश्च तन्द्रा चारम्भश्च गौरवं च लाघवं चाहारश्च विहारश्चाहारपरिणामश्चोपायश्चापायश्च व्याधिश्च व्याधिपूर्वरूपं च वेदनाश्चोपद्रवाश्च छाया च प्रतिच्छाया च स्वप्नदर्शनं च दूताधिकारश्च पथि चौत्पातिकं चातुरकुले भावावस्थान्तराणि च भेषजसंवृत्तिश्च भेषजविकारयुक्तिश्चेति परीक्ष्याणि प्रत्यक्षानुमानोपदेशैरायुषः प्रमाणविशेषं जिज्ञासमानेन भिषजा ॥ १ ॥

तत्र खल्वेषां परीक्ष्याणां कानिचित्पुरुषमनाश्रितानि कानिचिच्च पुरुषसंश्रयाणि। तत्र यानि पुरुषमनाश्रितानि तान्युपदेशतो युक्तितश्च परीक्षेत। पुरुषसंश्रयाणि पुनः प्रकृतितश्च विकृतितश्च॥२॥

तत्र प्रकृतिर्जातिप्रसक्ता कुलप्रसक्ता च देशानुपातिनी च कालानुपातिनी च वयोऽनुपातिनी च प्रत्यात्मनियता चेति। एतावज्जातिकुलदेशकालवयःप्रत्यात्मनियता हि तेषां तेषां पुरुषाणां वे ते भावविशेषा भवन्ति ॥ ३ ॥

विकृतिः पुनर्लक्षणनिमित्ता च लक्ष्यनिमित्ता च निमित्तानुरूपा च। तत्र लक्षणनिमित्ता नाम सा यस्याः शरीरे लक्षणान्येव हेतुभूतानि भवन्ति। लक्षणानि हि कानिचिच्छरीरोपनिबद्धानि भवन्ति। यानि हि तस्मिंस्तस्मिंस्तत्राधिष्ठानमासाद्य तां तां विकृतिमुत्पादयन्ति ॥ ४ ॥

लक्ष्यनिमित्ता तु सा यस्या उपलभ्यते निमित्तं यथोक्तं निदानेषु ॥ ५ ॥

निमित्तानुरूपा तु निमित्तार्थानुकारिणी या तामनिमित्तां निमित्तमायुषः प्रमाणज्ञानस्येच्छन्ति भिषजो भूयश्चायुषः क्षयनिमित्तां प्रेतलिङ्गानुरूपां यामायुषोऽन्तर्गतस्य ज्ञानार्थमुपदिशन्ति धीराः ६

यामधिकृत्य पुरुषसंश्रयाणि मुमूर्षतां लक्षणान्युपदेक्ष्याम इत्युद्देशः। तद्विस्तरेणानुव्याख्यास्यामः ॥ ७ ॥

तत्रादित एव वर्णाधिकारस्तद्यथा—कृष्णः कृष्णश्यामः श्यामावदातोऽवदातश्च इति प्रकृतिवर्णाः शरीरस्य ॥ ८ ॥

यांश्चापरानुपेक्षमाणो विद्यादनूकतोऽन्यथा वापि निर्दिश्यमानांस्तज्ज्ञैः ॥ ९ ॥

नीलश्यामताम्रहरितशुक्लाश्च वर्णाः शरीरस्य वैकारिका भवन्ति। यांश्चापरानुपेक्षमाणो विद्यात्प्राग्विकृतानभूत्वोत्पन्नानिति प्रकृतिविकृतिवर्णा भवन्त्युक्ताः शरीरस्य ॥ १० ॥

तत्र प्रकृतिवर्णोऽर्धशरीरे विकृतिवर्णोऽर्धशरीरे द्वावपि वर्णौ मर्यादाविभक्तौ दृष्ट्वा यद्येवं सव्यदक्षिणविभागेन यद्येवं पूर्वपश्चिमविभागेन यद्युत्तराधरविभागेन यद्यन्तर्बहिर्विभागेनातुरस्यारिष्टमिति विद्यात् ॥ ११ ॥

एवमेव वर्णभेदो मुखेऽप्यन्यतो वर्तमानो मरणाय भवति॥ १२॥

वर्णभेदेन ग्लानिहर्षरौक्ष्यस्नेहा व्याख्याताः ॥ १३ ॥

तथा पिप्लुव्यङ्गतिलकालकपिडकानामन्यतमस्यानने जन्मातुरस्यैवमेवाप्रशस्तं विद्यात् ॥ १४ ॥

नखनयनवदनमूत्रपुरीषहस्तपादौष्ठादिष्वपि च वैकारिकोक्तानां वर्णानामन्यतमस्य प्रादुर्भावो हीनबलवर्णेन्द्रियेषु लक्षणमायुषः क्षयस्य भवति। यच्चान्यदपि किंचिद्वर्णवैकृतमभूतपूर्वं सहसोत्पद्येतानिमित्तमेव हीयमानस्यातुरस्य तच्चारिष्टमिति वर्णाधिकारः॥ १५॥

## स्वराधिकारः।

स्वराधिकारस्तु हंसक्रौञ्चनेमिदुन्दुभिकलविङ्ककाककपोतझर्झरानुकराः प्रकृतिस्वराः। यांश्चापरानुपेक्षमाणोऽपि विद्यादनूकतोऽन्यथा वापि निर्दिश्यमानांस्तज्ज्ञैः ॥ १६ ॥

एडकग्रस्ताव्यक्तगद्गदक्षामदीनानुकीर्णास्त्वातुराणां स्वरा वैका-

रिकाः । यांश्चापरानुपेक्षमाणोऽपि विद्यात्प्राग्विकृतानभूत्वोत्पन्ना-निति प्रकृतिविकृतिस्वरा व्याख्याताः ॥ १७ ॥

तत्र प्रकृतिवैकारिकाणां स्वराणामाश्वभिनिर्वृत्तिः स्वरानेकत्वमेकस्य चानेकत्वमप्रशस्तमिति स्वराधिकारः । इति वर्णस्वराधिकारौ यथावदुक्तौ मुमूर्षतां ज्ञानार्थमिति ॥ १८ ॥

तत्र श्लोकाः ।

"यस्य वैकारिको वर्णः शरीर उपजायते ।
अर्धे वा यदि वा कृत्स्नेऽनिमित्तं न च नास्ति सः ॥ १९ ॥
नीलं वा यदि वा श्यावं ताम्रं वा यदि वारुणम् ।
मुखार्धमन्यथा वर्णो मुखार्धेऽरिष्टमुच्यते ॥ २० ॥
स्नेहो मुखार्धे सुव्यक्तो रौक्ष्यमर्धमुखे भृशम् ।
ग्लानिरर्धे तथा हर्षो मुखार्धे प्रेतलक्षणम् ॥ २१ ॥
तिलकाः पिप्लवो व्यङ्गा राजयश्च पृथग्विधाः ।
आतुरस्याशु जायन्ते मुखे प्राणान्मुमुक्षतः ॥ २२ ॥
पुष्पाणि नखदन्तेषु पङ्को वा दन्तसंस्थितः ।
चूर्णको वापि दन्तेषु लक्षणं मरणस्य तत् ॥ २३ ॥
ओष्ठयोः पादयोः पाण्योरक्ष्णोर्मूत्रपुरीषयोः ।
नखेष्वपि च वैवर्ण्यमेतत्क्षीणबलेऽन्तकृत् ॥ २४ ॥
यस्य नीलावुभावोष्ठौ पक्कजाम्बवसन्निभौ ।
मुमूर्षुरिति तं विद्यान्नरा धीरं गतायुषम् ॥ २५ ॥
एको वा यदि वानेको यस्य वैकारिकः स्वरः ।
सहसोत्पद्यते जन्तोर्हीयमानस्य नास्ति सः ॥ २६ ॥
यच्चान्यदपि किंचित्स्याद्वैकृतं स्वरवर्णयोः ।
बलमांसविहीनस्य तत्सर्वं मरणोदयम् ॥ २७ ॥"
इति वर्णस्वरावुक्तौ लक्षणार्थं मुमूर्षताम् ।
यस्तु सम्यग्विजानाति नायुर्ज्ञाने स मुह्यति ॥ २८ ॥

इति चरकसंहितायां इन्द्रियस्थाने प्रथमोऽध्यायः ॥ १ ॥

---

# द्वितीयोऽध्यायः ।

## अथातः पुष्पितमध्यायं व्याख्यास्यामः ।

"पुष्पं यथा पूर्वरूपं फलस्येह भविष्यतः ।
तथा लिङ्गमरिष्टाख्यं पूर्वरूपं मरिष्यतः ॥ १ ॥
अप्येवं तु भवेत्पुष्पं फलेनाननुबन्धि यत् ।
फलं चापि भवेत्किंचिद्यस्य पुष्पं न पूर्वजम् ॥ २ ॥
न त्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते ।
मरणं चापि तन्नास्ति यन्नारिष्टपुरःसरम् ॥ ३ ॥
मिथ्यादृष्टमरिष्टाभमनरिष्टमजानता ।
अरिष्टं चाप्यसंबुद्धमेतत्प्रज्ञापराधजम् ॥ ४ ॥
ज्ञानसंबोधनार्थं तु लिङ्गैर्मरणपूर्वजैः ।
पुष्पितानुपदेक्ष्यामो नरान्बहुविधाञ्शृणु ॥ ५ ॥
नानापुष्पोपमो गन्धो यस्य वाति दिवानिशम् ।
पुष्पितस्य वनस्यैव नानाद्रुमलतावतः ॥ ६ ॥
तमाहुः पुष्पितं धीरा नरं मरणलक्षणैः ।
स वै संवत्सराद्देहं जहातीति विनिश्चयः ॥ ७ ॥
एवमेकैकशः पुष्पैर्यस्य गन्धः समो भवेत् ।
इष्टैर्वा यदि वानिष्टैः स च पुष्पित उच्यते ॥ ८ ॥
समासेनाशुभान्गन्धानेकत्वेनाथ वा पुमान् ।
आजिघ्रेद्यस्य गात्रेषु तं विद्यात्पुष्पितं भिषक् ॥ ९ ॥
आप्लुतानाप्लुते काये यस्य गन्धाः शुभाशुभाः ।
व्यत्यासेनानिमित्ताः स्युः स च पुष्पित उच्यते ॥ १० ॥
तद्यथा चन्दनं कुष्ठं तगरागुरुणी मधु ।
माल्यं मूत्रपुरीषे वा मृतानि कुणपानि वा ॥ ११ ॥
ये चान्ये विविधात्मानो गन्धा विविधयोनयः ।
तेऽप्यनेनानुमानेन विज्ञेया विकृतिं गताः ॥ १२ ॥
इदं चाप्यतिदेशार्थं लक्षणं गन्धसंश्रयम् ।
वक्ष्यामो यदभिज्ञाय भिषङ्मरणमादिशेत् ॥ १३ ॥

विर्योनिर्विदुरो यस्य गन्धो गात्रेषु दृश्यते ।
इष्टो वा यदि वानिष्टो न स जीवति तां समाम् ॥ १४ ॥
एतावद्गन्धविज्ञानं रसज्ञानमतः परम् ।
आतुराणां शरीरेषु वक्ष्यामो विधिपूर्वकम् ॥ १५ ॥
यो रसः प्रकृतिस्थानां नराणां देहसंभवः ।
स एषां चरमे काले विकारान्भजते द्वयम् ॥ १६ ॥
कश्चिदेवास्यवैरस्यमत्यर्थमुपपद्यते ।
स्वादुत्वमपरश्चापि विपुलं भजते रसः ॥ १७ ॥
तमनेनानुमानेन विद्याद्विकृतिमागतम् ।
मनुष्यो हि मनुष्यस्य कथं रसमवाप्नुयात् ॥ १८ ॥
मक्षिकाश्चैव यूकाश्च दंशाश्च मशकैः सह ।
विरसादपसर्पन्ति जन्तोः कायान्मुमूर्षतः ॥ १९ ॥
अत्यर्थरसिकं कायं कालपक्वस्य मक्षिकाः ।
अपि स्नातानुलिप्तस्य भृशमायान्ति सर्वशः ॥ २० ॥"

तत्र श्लोकः ।

यान्येतानि मयोक्तानि लिङ्गानि रसगन्धयोः ।
पुष्पितस्य नरस्यैतैः फलं मरणमादिशेत् ॥ २१ ॥

इति चरकसंहितायामिन्द्रियस्थाने द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

अथातः परिमर्षणीयमध्यायं व्याख्यास्यामः ।

वर्णे स्वरे च गन्धे च रसे चोक्तं पृथक् पृथक् ।
लिङ्गं मुमूर्षतां सम्यक् स्पर्शेष्वपि निबोधत ॥ १ ॥

"स्पर्शप्राधान्येनातुरस्यायुषः प्रमाणविशेषं जिज्ञासुः प्रकृतिस्थेन पाणिना केवलमस्य शरीरं स्पृशेत् परिमर्षयेद्वान्येन ॥ २ ॥ परिमृषता तु खल्वातुरशरीरमिमे भावास्तत्रतत्रावबोद्धव्याः। तद्यथा—सततं स्पन्दनानां शरीरोद्देशानां स्तम्भः । नित्योष्मणां

शीतीभावः । मृदूनां दारुणत्वम् । श्लक्ष्णानां खरत्वम् । सतामसद्भावः । सन्धीनां स्रंसभ्रंशच्यवनानि । मांसशोणितयोर्वीतीभावः । दारुणत्वं स्वेदानुबन्धः स्तम्भो वा यच्चान्यदपि किंचिद्दृशविकृतमनिमित्तं स्यादिति लक्षणं स्पृश्यानां भावानाम् ॥ ३ ॥

तद्यासतोऽनुव्याख्यास्यामः । तस्य चेत्परिदृश्यमानं पृथक्त्वेन पादजङ्घोरुस्फिगुदरपार्श्वपृष्ठेषिकापाणिग्रीवाताल्वोष्ठललाटं स्विन्नं शीतं प्रस्तब्धं दारुणं वीतमांसशोणितं वा स्यात्परासुरयं पुरुषो न चिरात्कालं करिष्यतीति विद्यात् ॥ ४ ॥

तस्य चेत्परिमृश्यमानानि पृथक्त्वेन गुल्फजानुवंक्षणगुदवृषणमेढ्रनाभ्यंसस्तनमणिकहनुस्पर्शुकानासिकाकर्णाक्षिभ्रूशङ्खादीनि स्रस्तानि व्यस्तानि च्युतानि स्थानेभ्यः स्युः परासुरयं पुरुषो न चिरात्कालं करिष्यतीति विद्यात् ॥ ५ ॥

तथास्योच्छ्वासमन्यादन्तपक्ष्मचक्षुःकेशलोमोदरनखाङ्गुलीरालक्षयेत् । तस्य चेदुच्छ्वासोऽतिदीर्घोऽतिह्रस्वो वा स्यात्परासुरिति विद्यात् । तस्य चेन्मन्ये परिदृश्यमाने न स्पन्दयातां परासुरिति विद्यात् । तस्य चेद्दन्ताः प्रतिकीर्णा श्वेतजातशर्कराः स्युः परासुरिति विद्यात् । तस्य चेत्पक्ष्माणि जटाबद्धानि स्युः परासुरिति विद्यात् । तस्य चेच्चक्षुषी प्रकृतिहीने विकृतियुक्ते अत्युत्पिण्डितेऽतिप्रविष्टेऽतिजिह्मेऽतिविषमेऽतिप्रस्रुतेऽतिविमुक्तबन्धने सततोन्मेषिते सततनिमेषिते निमेषोन्मेषातिप्रवृत्ते विभ्रान्तदृष्टिके विपरीतदृष्टिके हीनदृष्टिके व्यस्तदृष्टिके नकुलान्धे कपोतान्धेऽलातवर्णे कृष्णनीलपीतश्यावताम्रहरितहारिद्रशुक्लवैकारिकाणां वर्णानामन्यतमेनाभिसंप्लुते वा स्यातां परासुरिति विद्यात् ॥ ६ ॥

अथास्य केशलोमान्यायच्छेत् । तस्य चेत्केशलोमान्यायम्यमानानि प्रलुच्येरन्न चेद्वेदयेत्परासुरिति विद्यात् ॥ ७ ॥

तस्य चेदुदरे शिराः प्रदृश्येरन् श्यावताम्रनीलहारिद्रशुक्ला वा स्युः परासुरिति विद्यात् ॥ ८ ॥

तस्य चेन्नखा वीतमांसशोणिताः पक्वजाम्बववर्णाः स्युः परासुरिति विद्यात् ॥ ९ ॥

अथास्याङ्गुलीरायच्छेत्तस्य चेदङ्गुलय आयम्यमाना न चेत्स्फुटेयुः परासुरिति विद्यात् ॥ १० ॥"

भवति चात्र ।

एतान् स्पृश्यान्बहून्भावान्यः स्पृशन्नवबुध्यते ।
आतुरे न स संमोहमायुर्ज्ञानस्य गच्छति ॥ ११ ॥

इति चरकसंहितायामिन्द्रियस्थाने तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

अथात इन्द्रियानीकमध्यायं व्याख्यास्यामः ।

इन्द्रियाणि यथा जन्तोः परीक्षेत विशेषवित् ।
ज्ञातुमिच्छन्भिषज्ज्ञानमायुषस्तन्निबोध मे ॥ १ ॥
"अनुमानात्परीक्षेत दर्शनादीनि तत्त्वतः ।
अद्धा हि विदितं ज्ञानमिन्द्रियाणामतीन्द्रियम् ॥ २ ॥
स्वस्थेभ्यो विकृतं यस्य ज्ञानमिन्द्रियसंभवम् ।
आलक्ष्येतानिमित्तेन लक्षणं मरणस्य तत् ॥ ३ ॥
इत्युक्तं लक्षणं सर्वमिन्द्रियेष्वशुभोदयम् ।
तदेव तु पुनर्भूयो विस्तरेण निबोधत ॥ ४ ॥
घनीभूतमिवाकाशमाकाशमिव मेदिनीम् ।
विगीतं ह्युभयं ह्येतत्पश्यन्मरणमृच्छति ॥ ५ ॥
यस्य दर्शनमायाति मारुतोऽम्बरगोचरः ।
अग्निर्नायाति वा दीप्तस्तस्यायुःक्षयमादिशेत् ॥ ६ ॥
जले सुविमले जालमजालावतते तथा ।
स्थिते गच्छति वा दृष्ट्वा जीवितात्परिमुच्यते ॥ ७ ॥
जाग्रन्पश्यति यः प्रेतान्रक्षांसि विविधानि च ।
अन्यद्वाप्यद्भुतं किंचिन्न स जीवितुमर्हति ॥ ८ ॥
योऽग्निं प्रकृतिवर्णस्थं नीलं पश्यति निष्प्रभम् ।
कृष्णं वा यदि वा शुक्लं निशां वसति सप्तमीम् ॥ ९ ॥
मरीचीनसतो मेघान्मेघान्वाप्यसतोऽम्बरे ।
विद्युतो वा विना मेघैः पश्यन्मरणमृच्छति ॥ १० ॥

मृण्मयीमिव यः पात्रीं कृष्णाम्बरसमावृताम् ।
आदित्यमीक्षते शुद्धं चन्द्रं वा न स जीवति ॥ ११ ॥
अपर्वणि यदा पश्येत्सूर्याचन्द्रमसोर्ग्रहम् ।
अव्याधितो व्याधितो वा तदन्तं तस्य जीवितम् ॥ १२ ॥
नक्तं सूर्यमहश्चन्द्रमनग्नौ धूममुत्थितम् ।
अग्निं वा निष्प्रभं रात्रौ दृष्ट्वा मरणमृच्छति ॥ १३ ॥
प्रभावतः प्रभाहीनान्निष्प्रभावान्प्रभावतः ।
नरा विलिङ्गान्पश्यन्ति भावान्प्राणाञ्जिहासवः ॥ १४ ॥
व्याकृतानि विवर्णानि विसंख्योपगतानि च ।
विनिमित्तानि पश्यन्ति रूपाण्यायुःक्षये नराः ॥ १५ ॥
यश्च पश्यत्यदृश्यान्वै दृश्यान्यश्च न पश्यति ।
तावुभौ पश्यतः क्षिप्रं यमक्षयमसंशयम् ॥ १६ ॥
अशब्दस्य च यः श्रोता शब्दान्यश्च न बुध्यते ।
द्वावप्येतौ यथा प्रेतौ तथा ज्ञेयौ विजानता ॥ १७ ॥
संवृत्याङ्गुलिभिः कर्णौ ज्वालाशब्दं य आतुरः ।
न शृणोति गतासुं तं बुद्धिमान्परिवर्जयेत् ॥ १८ ॥
विपर्ययेण यो विद्याद्गन्धानां साध्वसाधुताम् ।
न वा तान्सर्वशो विद्यात्तं विद्याद्विगतायुषम् ॥ १९ ॥
यो रसान्न विजानाति न वा जानाति तत्त्वतः ।
मुखपाकादृते पक्वं तमाहुः कुशला नरम् ॥ २० ॥
उष्णाञ्शीतान्खरान्श्लक्ष्णान्मृदूनपि च दारुणान् ।
स्पर्शान्स्पृष्ट्वा ततोऽन्यत्वं मुमूर्षुस्तेषु मन्यते ॥ २१ ॥
अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम् ।
इन्द्रियैरधिकं पश्यन्पञ्चत्वमधिगच्छति ॥ २२ ॥
इन्द्रियाणामृते दृष्टेरिन्द्रियार्थान्न पश्यति ।
विपर्ययेण यो विद्यात्तं विद्याद्विगतायुषम् ॥ २३ ॥
स्वस्थाः प्रज्ञाविपर्यासैरिन्द्रियार्थेषु वैकृतम् ।
पश्यन्ति ये सबहुशस्तेषां मरणमादिशेत् ॥ २४ ॥"

तत्र श्लोकः ।

एतदिन्द्रियविज्ञानं यः पश्यति यथा तथा ।
मरणं जीवितं चैतत्स भिषग्ज्ञातुमर्हति ॥ २५ ॥

इति चरकसंहितायामिन्द्रियस्थाने चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

अथातः पूर्वरूपीयमध्यायं व्याख्यास्यामः ।

पूर्वरूपाण्यसाध्यानां विकाराणां पृथक् पृथक् ।
भिन्नाभिन्नानि वक्ष्यामो भिषजां ज्ञानवृद्धये ॥ १ ॥
"पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया ।
यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः ॥ २ ॥
अन्यस्यापि च रोगस्य पूर्वरूपाणि यं नरम् ।
विशन्त्येतेन कल्पेन तस्यापि मरणं ध्रुवम् ॥ ३ ॥
पूर्वरूपैकदेशांस्तु वक्ष्यामोऽन्यान्सुदारुणान् ।
ये रोगाननुबध्नन्ति मृत्युर्यैरनुबध्यते ॥ ४ ॥
बलं च हीयते यस्य प्रतिश्यायश्च वर्धते ।
तस्य नारीप्रसक्तस्य शोषोऽन्तायोपजायते ॥ ५ ॥
श्वभिरुष्ट्रैः खरैर्वापि याति यो दक्षिणां दिशम् ।
स्वप्ने यक्ष्माणमासाद्य जीवितं स विमुञ्चति ॥ ६ ॥
प्रेतैः सह पिबेन्मद्यं स्वप्ने यः कृष्यते शुना ।
स घोरं ज्वरमासाद्य न जीवेन्न च सृज्यते ॥ ७ ॥
लाक्षारक्ताम्बराभं यः पश्यत्यम्बरमन्तिकात् ।
स रक्तपित्तमासाद्य तेनैवान्ताय नीयते ॥ ८ ॥
रक्तस्रग्रक्तसर्वाङ्गो रक्तवासा मुहुर्हसन् ।
यः स्वप्ने ह्रियते नार्या स रक्तं प्राप्य सीदति ॥ ९ ॥
शूलाटोपान्त्रकूजाश्च दौर्बल्यं चातिमात्रया ।
नखादिषु च वैवर्ण्यं गुल्मेनान्तकरो ग्रहः ॥ १० ॥
लता कण्टकिनी यस्य दारुणा हृदि जायते ।
स्वप्ने गुल्मस्तमन्ताय क्रूरो विशति मानवम् ॥ ११ ॥

कायेऽल्पमपि संस्पृष्टं सुभृशं यस्य दीर्यते ।
क्षतानि च न रोहन्ति कुष्ठैर्मृत्युर्हिनस्ति तम् ॥ १२ ॥
नग्नस्याज्यावसिक्तस्य जुह्वतोऽग्निमनर्चिषम् ।
पद्मान्युरसि जायन्ते स्वप्ने कुष्ठैर्मरिष्यतः ॥ १३ ॥
स्नातानुलिप्तगात्रेऽपि यस्मिन्गृध्नन्ति मक्षिकाः ।
स प्रमेहेण संस्पर्शं प्राप्य तेनैव हन्यते ॥ १४ ॥
स्नेहं बहुविधं स्वप्ने चण्डालैः सह यः पिबेत् ।
बुध्यते स प्रमेहेण स्पृश्यतेऽन्ताय मानवः ॥ १५ ॥
ध्यानायासौ तथोद्वेगो मोहश्चास्थानसंभवः ।
अरतिर्बलहानिश्च मृत्युरुन्मादपूर्वकः ॥ १६ ॥
आहाराद्वेषिणं पश्यँल्लुप्तचित्तमुदर्दितम् ।
विद्याद्धीरो मुमूर्षुं तमुन्मादेनातिपातिना ॥ १७ ॥
क्रोधनं त्रासबहुलं सकृत्प्रहसिताननम् ।
मूर्च्छापिपासाबहुलं हन्त्युन्मादः शरीरिणम् ॥ १८ ॥
नृत्यन्रक्षोगणैः सार्धं यः स्वप्नेऽम्भसि सीदति ।
स प्राप्य भृशमुन्मादं याति लोकमतःपरम् ॥ १९ ॥
असत्तमः पश्यति यः शृणोत्यप्यसतः स्वरान् ।
बहून्बहुविधाञ्जाग्रत्सोऽपस्मारेण बध्यते ॥ २० ॥
मत्तं नृत्यन्तमाविध्य प्रेतो हरति यं नरम् ।
स्वप्ने हरति तं मृत्युरपस्मारपुरःसरः ॥ २१ ॥
स्तुभ्येते प्रतिबुद्धस्य हनू मन्ये तथाक्षिणी ।
यस्य तं बहिरायामो गृहीत्वा हन्त्यसंशयम् ॥ २२ ॥
शष्कुलीरप्यपूपान्वै स्वप्ने खादति यो नरः ।
स चेत्तादृक्छर्दयति प्रतिबुद्धो न जीवति ॥ २३ ॥
एतानि पूर्वरूपाणि यः सम्यगवबुध्यते ।
स एषामनुबन्धं च फलं च ज्ञातुमर्हति ॥ २४ ॥
य इमांश्चापरान्स्वप्नान्दारुणानुपलक्षयेत् ।
व्याधितानां विनाशाय क्लेशाय महतेऽपि वा ॥ २५ ॥

यस्योत्तमाङ्गे जायन्ते वंशगुल्मलतादयः ।
वयांसि च विलीयन्ते स्वप्ने मौण्ड्यमियाच्च यः ॥ २६ ॥
गृध्रोलूकश्वकाकाद्यैः स्वप्ने यः परिवार्यते ।
रक्षःप्रेतपिशाचस्त्रीचण्डालद्रविडान्ध्रकैः ॥ २७ ॥
वंशवेत्रलतापाशतृणकण्टकसंकटे ।
प्रमुह्यति हि यः स्वप्ने लगति प्रपतत्यपि ॥ २८ ॥
भूमौ पांशूपधानायां वल्मीके वाथ भस्मनि ।
श्मशानायतने श्वभ्रे स्वप्ने यः प्रपतत्यपि ॥ २९ ॥
कलुषेऽम्भसि पङ्के च कूपे वा तमसावृते ।
स्वप्ने मज्जति शीघ्रेण स्रोतसा ह्रियते च यः ॥ ३० ॥
स्नेहपानं तथाभ्यङ्गः स्वप्ने बन्धपराजयौ ।
हिरण्यलाभः कलहः प्रच्छर्दनविरेचने ॥ ३१ ॥
उपानद्युगनाशश्च प्रपातः पांशुचर्मणोः ।
हर्षः स्वप्ने प्रकुपितैः पितृभिश्चापि भर्त्सनम् ॥ ३२ ॥
दन्तचन्द्रार्कनक्षत्रदेवतादीपचक्षुषाम् ।
पतनं वा विनाशो वा स्वप्ने भेदो नगस्य वा ॥ ३३ ॥
रक्तपुष्पं वनं भूमिं पापकर्मालयं चिताम् ।
गुहान्धकारसंबाधं स्वप्ने यः प्रविशत्यपि ॥ ३४ ॥
रक्तमाली हसन्नुच्चैर्दिग्वासा दक्षिणां दिशम् ।
दारुणामटवीं स्वप्ने कपियुक्तः प्रयाति वा ॥ ३५ ॥
कषायिणामसौम्यानां नग्नानां दण्डधारिणाम् ।
कृष्णानां रक्तनेत्राणां स्वप्ने नेच्छन्ति दर्शनम् ॥ ३६ ॥
कृष्णा पापा निराचारा दीर्घकेशनखस्तनी ।
विरागमाल्यवसना स्वप्ने कालनिशा मता ॥ ३७ ॥
इत्यन्ये दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम् ।
अरोगः संशयं गत्वा कश्चिदेव विमुच्यते ॥ ३८ ॥
मनोवहानां पूर्णत्वाद्दोषैरतिबलैस्त्रिभिः ।
स्रोतसां दारुणान्स्वप्नान्काले पश्यति दारुणे ॥ ३९ ॥

नातिप्रसुप्तः पुरुषः सफलानफलानपि ।
इन्द्रियेशेन मनसा स्वप्नान्पश्यत्यनेकधा ॥ ४० ॥
दृष्टं श्रुतानुभूतं च प्रार्थितं कल्पितं तथा ।
भाविकं दोषजं चैव स्वप्नं सप्तविधं विदुः ॥ ४१ ॥
तत्र पञ्चविधं पूर्वमफलं भिषगादिशेत् ।
दिवास्वप्नमतिह्रस्वमतिदीर्घं च बुद्धिमान् ॥ ४२ ॥
दृष्टः प्रथमरात्रे यः स्वप्नः सोऽल्पफलो भवेत् ।
न स्वपेद्यः पुनर्दृष्ट्वा स सद्यः स्यान्महाफलः ॥ ४३ ॥
अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः ।
पश्येत्सौमं शुभाकारं तस्य विद्याच्छुभं फलम् ॥ ४४ ॥"

तत्र श्लोकः ।

पूर्वरूपाण्यथ स्वप्नान्य इमान्वेत्ति दारुणान् ।
न स मोहादसाध्येषु कर्माण्यारभते भिषक् ॥ ४५ ॥

इति चरकसंहितायां इन्द्रियस्थाने पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अथातः कतमानिशरीरीयमध्यायं व्याख्यास्यामः ।

कतमानि शरीराणि व्याधिमन्ति महामुने ।
यानि वैद्यः परिहरेद्येषु कर्म न सिध्यति ॥ १ ॥
इत्यात्रेयोऽग्निवेशेन प्रश्नं पृष्टः सुहृद्वचम् ।
आचचक्षे यथा तस्मै भगवंस्तन्निबोध मे ॥ २ ॥
"यस्य वै भाषमाणस्य रुजत्यूर्ध्वमुरो भृशम् ।
अन्नं च च्यवते भुक्तं स्थितं चापि न जीर्यति ॥ ३ ॥
बलं च हीयते यस्य तृष्णा चाभिप्रवर्धते ।
जायते हृदि शूलं च तं भिषक्परिवर्जयेत् ॥ ४ ॥
हिक्का गम्भीरजा यस्य शोणितं चातिसार्यते ।
न तस्मै भेषजं दद्यात्स्मरन्नात्रेयशासनम् ॥ ५ ॥

आनाहश्चातिसारश्च यमेतौ दुर्बलं नरम् ।
व्याधितं विशतो रोगौ दुर्लभं तस्य जीवितम् ॥ ६ ॥
आनाहश्चैव तृष्णा च यमेतौ दुर्बलं नरम् ।
विशतो विजहत्येनं प्राणानतिचिरान्नरम् ॥ ७ ॥
ज्वरः पौर्वाह्णिको यस्य शुष्कः कासश्च दारुणः ।
ज्वरो यस्यापराह्णे तु श्लेष्मकासश्च दारुणः ।
बलमांसविहीनस्य यथा प्रेतस्तथैव सः ॥ ८ ॥
यस्य मूत्रं पुरीषं च ग्रथितं संप्रवर्तते ।
निरुष्मिणो जठरिणः श्वसनो न स जीवति ॥ ९ ॥
श्वयथुर्यस्य कुक्षिस्थो हस्तपादं विसर्पति ।
ज्ञातिसंघं स संक्लिश्य तेन रोगेण हन्यते ॥ १० ॥
श्वयथुर्यस्य पादस्थस्तथा स्रस्ते च पिण्डिके ।
सीदतश्चाप्युभे जङ्घे तं भिषक्परिवर्जयेत् ॥ ११ ॥
शूनहस्तं शूनपादं शूनगुह्योदरं नरम् ।
हीनवर्णबलाहारमौषधैर्नोपपादयेत् ॥ १२ ॥
उरोयुक्तो बहुश्लेष्मा नीलः पीतः सलोहितः ।
सततं च्यवते यस्य दूरात्तं परिवर्जयेत् ॥ १३ ॥
हृष्टरोमा सान्द्रमूत्रः शूनः कासज्वरार्दितः ।
क्षीणमांसो नरो दूराद्वर्ज्यो वैद्येन जानता ॥ १४ ॥
त्रयः प्रकुपिता यस्य दोषाः कोष्ठेऽभिलक्षिताः ।
कृशस्य बलहीनस्य नास्ति तस्य चिकित्सितम् ॥ १५ ॥
ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये ।
दुर्बलस्य विशेषेण नरस्यान्ताय जायते ॥ १६ ॥
पाण्डूदरः कृशोऽत्यर्थं तृष्णयाभिपरिप्लुतः ।
डम्बरी कुपितोच्छ्वासः प्रत्याख्येयो विजानता ॥ १७ ॥
हनुमन्याग्रहस्तृष्णा बलह्रासोऽतिमात्रया ।
प्राणाश्चोरसि वर्तन्ते यस्य तं परिवर्जयेत् ॥ १८ ॥
ताम्यत्यायच्छते शर्म न किंचिदपि विन्दति ।
क्षीणमांसबलाहारो मुमूर्षुरचिरान्नरः ॥ १९ ॥

विरुद्धयोनयो यस्य विरुद्धोपक्रमा भृशम् ।
वर्धन्ते दारुणा रोगाः शीघ्रं शीघ्रं स हन्यते ॥ २० ॥
बलं विज्ञानमारोग्यं ग्रहणीमांसशोणितम् ।
एतानि यस्य क्षीयन्ते क्षिप्रं क्षिप्रं स हन्यते ॥ २१ ॥
विकारा यस्य वर्धन्ते प्रकृतिः परिहीयते ।
सहसा सहसा तस्य मृत्युर्हरति जीवितम् ॥ २२ ॥
इत्येतानि शरीराणि व्याधिमन्ति विवर्जयेत् ।

तत्र श्लोकः ।

न ह्येषु धीराः पश्यन्ति सिद्धिं कांचिदुपक्रमात् ॥ २३ ॥

इति चरकसंहितायामिन्द्रियस्थाने षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः ।

### अथातः पन्नरूपीयमध्यायं व्याख्यास्यामः ।

"दृष्ट्यां यस्य विजानीयात्पन्नरूपां कुमारिकाम् ।
प्रतिच्छायामयीमक्ष्णोर्नैनमिच्छेच्चिकित्सितुम् ॥ १ ॥
ज्योत्स्नायामातपे दीपे सलिलादर्शयोरपि ।
अङ्गेषु विकृता यस्य छाया प्रेतस्तथैव सः ॥ २ ॥
छिन्ना भिन्नाकुला छाया हीना वाप्यधिकापि वा ।
नष्टा तन्वी द्विधा छाया विशिरा विस्तृता च या ॥ ३ ॥
एताश्चान्याश्च याः काश्चित्प्रतिच्छाया विगर्हिताः ।
सर्वा मुमूर्षतां ज्ञेया न चेल्लक्ष्यनिमित्तजाः ॥ ४ ॥
संस्थानेन प्रमाणेन वर्णेन प्रभया तथा ।
छाया विवर्तते यस्य स्वप्नेऽपि प्रेत एव सः ॥ ५ ॥
संस्थानमाकृतिर्ज्ञेया सुषमा विषमा च या ।
मध्यमल्पं महच्चोक्तं प्रमाणं त्रिविधं नृणाम् ॥ ६ ॥
प्रतिप्रमाणसंस्थाना जलादर्शातपादिषु ।
छाया या सा प्रतिच्छाया या च वर्णप्रभाश्रया ॥ ७ ॥

खादीनां पञ्च पञ्चानां छाया विविधलक्षणाः ।
नाभसी निर्मला नीला सस्नेहा सप्रभेव च ॥ ८ ॥
रूक्षा श्यावारुणा या तु वायवी सा हतप्रभा ।
विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥ ९ ॥
शुद्धवैदूर्यविमला सुस्निग्धा चाम्भसी मता ।
स्थिरा स्निग्धा घना श्लक्ष्णा श्यामा श्वेता च पार्थिवी ॥१०॥
वायवी गर्हिता त्वासां चतस्रः स्युः शुभोदयाः ।
वायवी तु विनाशाय क्लेशाय महतेऽपि वा ॥ ११ ॥
स्यात्तैजसी प्रभा सर्वा सा तु सप्तविधा स्मृता ।
रक्ता पीता सिता श्यावा हरिता पाण्डुराऽसिता ॥ १२ ॥
तासां याः स्युर्विकासिन्यः स्निग्धाश्च विपुलाश्च याः ।
ताः शुभा रूक्षमलिनाः संक्षिप्ताश्चाशुभोदयाः ॥ १३ ॥
वर्णमाक्रामति छाया भास्तु वर्णप्रकाशिनी ।
आसन्ना लक्ष्यते छाया भाः प्रकृष्टा प्रकाशते ॥ १४ ॥
नाच्छायो नाप्रभः कश्चिद्विशेषाचिह्नयन्ति तु ।
नृणां शुभाशुभोत्पत्तिं काले छायाः प्रभाश्रिताः ॥ १५ ॥
कामलाक्ष्णोर्मुखं पूर्णं गण्डयोर्युक्तमांसता ।
संत्रासश्चोष्णगात्रं च यस्य तं परिवर्जयेत् ॥ १६ ॥
उत्थाप्यमानः शयनात्प्रमोहं याति यो नरः ।
मुहुर्मुहुर्न सप्ताहं स जीवति विकत्थनः ॥ १७ ॥
संसृष्टा व्याधयो यस्य प्रतिलोमानुलोमगाः ।
व्यापन्ना ग्रहणी प्रायः सोऽर्धमासं न जीवति ॥ १८ ॥
उपद्रुतस्य रोगेण कर्पितस्याल्पमश्नतः ।
बहुमूत्रपुरीषं स्याद्यस्य तं परिवर्जयेत् ॥ १९ ॥
दुर्बलो बहु भुङ्क्ते यः प्राग्भुक्तादन्नमातुरः ।
अल्पमूत्रपुरीषश्च यथा प्रेतस्तथैव सः ॥ २० ॥
वर्धिष्णुगुणसंपन्नमन्नमश्नाति यो नरः ।
शश्वच्च बलवर्णाभ्यां हीयते न स जीवति ॥ २१ ॥

प्रकूजति प्रश्वसिति शिथिलं चातिसार्यते ।
बलहीनः पिपासार्तः शुष्कास्यो न स जीवति ॥ २२ ॥
ह्रस्वं च यः प्रश्वसिति व्याविद्धं स्पन्दते च यः ।
मृतमेव तमात्रेयो व्याचचक्षे पुनर्वसुः ॥ २३ ॥
ऊर्ध्वंच यः प्रश्वसिति श्लेष्मणा चाभिभूयते ।
हीनवर्णबलाहारो यो नरो न स जीवति ॥ २४ ॥
ऊर्ध्वाग्रे नयने यस्य मन्ये चानतकम्पने ।
बलहीनः पिपासार्तः शुष्कास्यो न स जीवति ॥ २५ ॥
यस्य गण्डावुपचितौ ज्वरकासौ च दारुणौ ।
शूली प्रद्वेष्टि चाप्यन्नं तस्मिन्कर्म न सिध्यति ॥ २६ ॥
व्यावृत्तमूर्धजिह्वाक्षौ भ्रुवौ यस्य च विच्युते ।
कण्टकैश्चाचिता जिह्वा यथा प्रेतस्तथैव सः ॥ २७ ॥
शेफश्चात्यर्थमुत्सिक्तं निःसृतौ वृषणौ भृशम् ।
अतश्चैव विपर्यासो विकृत्या प्रेतलक्षणम् ॥ २८ ॥
निचितं यस्य मांसं स्यात्त्वगस्थि चैव दृश्यते ।
क्षीणस्नानश्चतस्तस्य मासमायुः परं भवेत् ॥ २९ ॥"

तत्र श्लोकः ।

इदं लिङ्गमरिष्टाख्यमनेकमभिजज्ञिवान् ।
आयुर्वेदविदित्याख्यां लभते कुशलो नरः ॥ ३० ॥

इति चरकसंहितायामिन्द्रियस्थाने सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

### अवाक्शिरसीयम् ।

"अवाक्शिरा वा जिह्मा वा यस्य वा विशिरा भवेत् ।
जन्तो रूपप्रतिच्छाया नैनमिच्छेच्चिकित्सितुम् ॥ १ ॥
जटीभूतानि पक्ष्माणि दृष्टिश्चापि निगृह्यते ।
यस्य जन्तोर्न तं धीरो भेषजेनोपपादयेत् ॥ २ ॥

यस्य शूनानि वर्त्मानि न समायान्ति शुष्यतः ।
चक्षुषी चोपदह्येते यथा प्रेतस्तथैव सः ॥ ३ ॥
भ्रुवोर्वा यदि वा मूर्ध्नि सीमन्तावर्तकान्बहून् ।
अपूर्वानकृतान्व्यक्तान्दृष्ट्वा मरणमादिशेत् ॥ ४ ॥
त्र्यहमेतेन जीवन्ति लक्षणेनातुरा नराः ।
अरोगाणां पुनस्त्वेतत्षड्रात्रं परमुच्यते ॥ ५ ॥
आयम्योत्पाटितान्केशान्यो नरो नावबुध्यते ।
अनातुरो वा रोगी वा षड्रात्रं नातिवर्तते ॥ ६ ॥
यस्य केशा निरभ्यङ्गा दृश्यन्तेऽभ्यक्तसंनिभाः ।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्जयेत् ॥ ७ ॥
ग्लायतो नासिकावंशः पृथुत्वं यस्य गच्छति ।
अशूनः शूनसंकाशः प्रत्याख्येयः स जानता ॥ ८ ॥
अत्यर्थविवृता यस्य यस्य चात्यर्थसंवृता ।
जिह्वा वा परिशुष्का वा नासिका न स जीवति ॥ ९ ॥
मुखं शब्दस्त्ववावोष्ठौ शुक्लश्यावातिलोहितौ ।
विकृतौ यस्य वा नीलौ न स रोगाद्विमुच्यते ॥ १० ॥
अस्थिश्वेता द्विजा यस्य पुष्पिताः पङ्कसंवृताः ।
विकृत्या न स रोगं तं विहायारोग्यमश्नुते ॥ ११ ॥
स्तब्धा निश्चेतना गुर्वी कण्टकोपचिता भृशम् ।
श्यावा शुष्काथवा शूना प्रेतजिह्वा विसर्पिणी ॥ १२ ॥
दीर्घमुच्छ्वस्य यो ह्रस्वं नरो निश्वस्य ताम्यति ।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्जयेत् ॥ १३ ॥
हस्तौ पादौ च मन्ये च तालु चैवातिशीतलम् ।
भवत्यायुःक्षये क्रूरमथवापि भवेन्मृदु ॥ १४ ॥
घट्टयञ्जानुना जानु पादावुद्यम्य पातयन् ।
योऽप्यास्यति मुहुर्वक्त्रमातुरो न स जीवति ॥ १५ ॥
दन्तैश्छिन्दन्नखाग्राणि नखैश्छिन्दञ्छिरोरुहान् ।
काष्ठेन भूमिं विलिखन्न रोगात्परिमुच्यते ॥ १६ ॥

दन्तान्खादति यो जाग्रदसाम्ना विरुदन्हसन् ।
विजानाति न चेद्दुःखं न स रोगाद्विमुच्यते ॥ १७ ॥
मुहुर्हसन्मुहुः क्ष्वेडञ्छय्यां पादेन हन्ति यः ।
उच्चैश्छिद्राणि विमृशन्नातुरो न स जीवति ॥ १८ ॥
यैर्विन्दति पुरा भावैः समेतैः परमां रतिम् ।
तैरेवारममाणस्य ग्लास्नोर्मरणमादिशेत् ॥ १९ ॥
न बिभर्ति शिरोग्रीवां न पृष्ठं भारमात्मनः ।
न हनू पिण्डमास्यस्थमातुरस्य मुमूर्षतः ॥ २० ॥
सहसा ज्वरसंतापस्तृष्णा मूर्छाबलक्षयः ।
विश्लेषणं च संधीनां मुमूर्षोरुपजायते ॥ २१ ॥
गोसर्गे वदनाद्यस्य स्वेदः प्रच्यवते भृशम् ।
लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम् ॥ २२ ॥
नोपैति कण्ठमाहारो जिह्वा कण्ठमुपैति च ।
आयुष्यन्तं गते जन्तोर्बलं च परिहीयते ॥ २३ ॥
शिरो विक्षिपते कृच्छ्रान्मुञ्चयित्वा प्रपाणिकौ ।
ललाटप्रस्नुतस्वेदो मुमूर्षुः श्लथबन्धनः ॥ २४ ॥"

अत्र श्लोकः ।

इमानि लिङ्गानि नरेषु बुद्धिमान्विभावयेतावहितो मुहुर्मुहुः ।
क्षणेन भूत्वा ह्युपयान्ति कानिचिन्न चाफलं लिङ्गमिहास्ति किंचन २५

इति चरकसंहितायामिन्द्रियस्थानेऽष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

### अथातो यस्य श्यावनिमित्तीयं व्याख्यास्यामः ।

"यस्य श्यावे परिध्वस्ते हरिते चापि दर्शने ।
आपन्नो व्याधिरन्ताय ज्ञेयस्तस्य विजानता ॥ १ ॥
निःसंज्ञः परिशुष्कास्यः संविद्धो व्याधिभिश्च यः ।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्जयेत् ॥ २ ॥